काव्यमाला. ७९.

श्रीमदभयदेवविरचितं

# जयन्तविजयम् ।

जयपुरमहाराजाश्रितमहामहोपाध्यायपण्डितदुर्गाप्रसादद्दारककेदारनाथ-
कृपाङ्गीकृतशोधनकर्मणा
महामहोपाध्यायपण्डितशिवदत्तशर्मतनूजपण्डितभवदत्तशास्त्रिणा,
मुम्बापुरवासिपरबोपाह्वपाण्डुरङ्गात्मजकाशीनाथशर्मणा च
संशोधितम् ।



तच्च

मुम्बय्यां निर्णयसागराख्ययन्त्रालये तदधिपतिना मुद्राक्षरैरङ्कयित्वा
प्राकाश्यं नीतम् ।

१९०२



मूल्यमेको रूप्यकः ।

KÂVYAMÂLÂ. 75.

# THE JAYANTAVIJAYA

OF

ABHAYADEVA.



EDITED BY

PANDIT BHAVADATTA S'ASTRÎ,

2nd Pandit, Government College, Ajmere,

Son of

MAHÂMAHOPÂDYÂYA PAṆḌIT S'IVADATTA

Head Paṇḍit and Superintendent, Sanskṛit Department,

Oriental College, Lahore,

AND

KÂS'ÎNÂTH PÂṆDURANG PARAB.

PRINTED AND PUBLISHED

BY

TUKÂRÂM JÂVAJÎ

PROPRIETOR OF JAVAJI DADAJI'S 'NIRNAYA-SAGARA' PRESS.

BOMBAY.

1902.

*Price* 1 *Rupee.*

# अभयदेवः ।

अयं **श्वेताम्बर**जैनाचार्यः श्रीमान**भयदेवः** कदा कतममिलामण्डलं मण्डयामासेति जिज्ञासायामनेकग्रन्थपर्यालोचने प्रवृत्ते—

'आसीच्च**न्द्र**कुलाम्बराम्बरमणिः श्री**वर्धमान**प्रभोः
पादाम्भोरुहचञ्चरीकचरितश्चारित्रिणामग्रणीः ।
सः श्रीसूरि**जिनेश्वर**स्त्रिपथगापाथःप्रवाहैरिव
स्वैरं यस्य यशोभरैस्त्रिजगतः पावित्र्यमासूत्रितम् ॥ १ ॥
अभवद**भयदेवः** सूरिरस्मात्स यस्य
प्रभुरभजत तोषं **स्तम्भने** पार्श्वनाथः ।

---

१. अनेनैव **समवायाङ्ग**टीका प्रण्यनायि । यथा—

'निःसंबन्धविहारिहारिचरिताञ्श्री**वर्धमाना**भिधा-
न्सूरीन्ध्यातवतोऽतितीव्रतपसो ग्रन्थप्रणीतिप्रभोः ।
श्रीमत्सूरि**जिनेश्वर**स्य जयिनो दर्पीयसां वाग्मिनां
तद्बन्धोरपि **बुद्धिसागर** इति ख्यातस्य सूरेर्भुवि ॥
शिष्ये**णाभयदेवा**ख्यसूरिणा विवृतिः कृता ।
श्रीमतः **समवाया**ख्यतुर्याङ्गस्य समासतः ॥
एकादशसु शतेष्वथ विंशत्यधिकेषु (११२०=A. D. 1164) विक्रमसमानाम् ।
**अणहिल्लपाटनगरे** रचिता **समवाय**टीकेयम् ॥' इति ।

२. अयं हि सूरिस्त्रिंशत्तमवृत्तेन **स्तम्भनक**पार्श्वनाथं संतुतोष—

'जय तिहुअणवरकप्परुक्ख जय जिण धण्णंतरि
जय तिहुअणकल्लाणकोस दुरिअक्करिकेसरि ।
तिहुअणजण अविलङ्घियाण भुवणत्तयसामिअ
कुणसु सुहाइं जिणेसपास **थंभणयपुर**ट्ठिअ ॥ १ ॥
तइं समरन्त लहंति झत्तिवर पुत्तकलत्तहिं
धण्ण सुवण्ण हिरण्ण पुण्ण जण भुंजहि रज्जहि ।
पिक्खहि मुक्ख असंखसुक्ख तुह पासपसाइण
इय तिहुअणवरकप्परुक्ख सुक्खहि कुण महिजिण ॥ २ ॥
जरजज्जर परिजुण्ण कण्णुणट्टुट्ठ सुकुट्ठिण
चक्खुक्खीणखएण खुज्झुनिरसल्लिअ सूलिण ।

जय०

तुह जिण सरणरसायणेण लहु हुंति पुणण्णव
जय धण्णंतरिपास महवि तुह रोगहरो भव ॥ ३ ॥
विज्जा जोइसमंततंतसिद्धिउ अपयत्तिण
भुवणब्भुअ अट्ठविह सिद्धि सिज्झइ तुह नामिण ।
तुह नामिण अपवित्तओ वि जण होइ पवित्तउ
तं तिहुअणकल्लाणकोस तुह पास निरुत्तउ ॥ ४ ॥
खुद्द पवित्तइ मंततंतजंताइं विसुत्तइ
चरथिरगरलगहुग्गखग्गरिउवग्गविगंजइ ।
दुत्थिअसत्थ अणत्थ घत्थ नित्थारइ दयकरि
दुरिअइं हरउ सुपासदेव दुरिअक्करिकेसरि ॥ ५ ॥
तुह आणाथंभेइ भीमदप्पुद्धुर सुरवर
रक्खस जक्ख फणिंद विंद चोरानलजलहर ।
जलथलचारिरउद्दखुद्द पसुजोइणि जोइअ
इअ तिहुअण अविलंघिआण जय पास सुसामिअ ॥ ६ ॥
पत्थिअ अत्थ अणत्थहित्थभत्तिब्भरनिब्भर
रोमंचंचिअ चारुकाय किण्णरनरसुरवर ।
जसु सेवहिं कमकमलजुअल पक्खालिअकलिमलु
सो भुवणत्तयसामिपास महमद्दउ रिउबलु ॥ ७ ॥
जय जोइअमणकमलभसलभय पंजरकुंजर
तिहुअणजण आणंदचंद भुवणत्तयदिणयर ।
जय मइमेइणि वारिवाह जय जंतु पिआमह
**थंभणय**ट्ठिअ पासनाह नाहत्तणकुणमह ॥ ८ ॥
बहु विहवण्णु अवण्णु सुण्णु वण्णिउ छप्पण्णहि
मुक्खधम्मु कामत्थकाम नर नियनियसत्थहि ।
जं ज्झायइ बहु दरिसणत्थ बहु नाम पसिद्धउ
सो जोइ अमण कमलभसलसुह पास पवद्धउ ॥ ९ ॥
भयबिब्भल रणझणिरदसण थरहरिअ सरीरय
तरलिअ नयणविसण्णुसुण्णुगग्गिरगिरकरुणय ।
तइं सहसत्ति सरंति हुंति नरनासिअ गुरुदर
महविज्जविसज्जसइ पास भय पंजरकुंजर ॥ १० ॥
पइं पासविविअसंतनित्तपत्तंतपवित्तिय
वाहपवाहपवूढरूढ दुहदाहसुपुलइय ।

मण्णहिं मण्णुसउण्णपुण्णअप्पाणं सुरनर
इअ तिहुअण आणंदचंद जय पास जिणेसर ॥ ११ ॥
तुह कल्लाणमहेसुघंटटंकारवपिल्लिअ
वल्लरमल्लमहल्लभत्तिसुरवरगंजुल्लिअ ।
हल्लुप्फलिअ पवत्तयंति भवणेहिं महूसव
इअ तिहुअण आणंदचंद जय पास सुहुब्भव ॥ १२ ॥
निम्मल केवल किरणनियरविहुरिअ तमपहयर
दंसिअ सयलपयत्थसत्थवित्थरिअ पहाभर ।
कलिकलुसिअ जण घूअलोयलोयणह अगोयर
तिमिरइं निरुहर पासनाह भुवणत्तयदिणयर ॥ १३ ॥
तुह समरणजलवरिससित्त माणव मइ मेइणि
अवरावरसुहुमत्थबोह कंदलदल रेहणि ।
जायइ फलभरभरिय हरिय दुहदाह अणोवम
इय मइ मेइणि वारिवाह दिसिपास मइं मम ॥ १४ ॥
कय अविकल कल्लाणवल्लिउल्लूरियदुहवणुं
दाविअ सग्गपवग्गमग्ग दुग्गइगम वारणुं ।
जय जंतुहजणएणतुल्लजंजणि यहियावहु
रम्म धम्म सो जयउ पास जय जंतुपिआमहु ॥ १५ ॥
भुवणारण्णनिवासदरिअपरदरिसणदेवय
जोइणिपूअणखित्तवाल खुद्दासुर पसुवय ।
तुह उत्तट्ठ सुनट्ठ सुट्ठ अविसंठुल चिट्ठहिं
इय तिहुअणवणसिंह पास पावाइ पणासहिं ॥ १६ ॥
फणिफणफारफुरंतरयण कररंजिअनहयल
फलिणी कंदलदलतमाल निल्लुप्पलसामल ।
कमठासुर उवसग्गवग्ग संसग्ग अंगजिअ
जय पच्चक्खजिणेस पास**थंभणयपुर**ट्ठिअ ॥ १७ ॥
महमणतरलपमाणनेय वायाविविसंठुल
नियतणुरवि अविणयसहाव आलसविहिलंघल ।
तुह माहप्पपमाणदेव कारुण्णपवत्तउ
इयम इमाअवहीरपासपालहिविलवंतनु ॥ १८ ॥
किंकिंकप्पिउणेयकलुणकिंकिंवनजं पिउ
किं वनचिट्ठिउकिट्ठदेवदीणयम विलंबिउ ।

कासुनकियनिप्पल्लल्लुअल्लोहिं दुहत्तइं
तह विनपत्तउताण किंपि पइं पहु परिचत्तइं ॥ १९ ॥
तुहुं सामिह तुहुं माय बप्प तुहुं मित्तपियं कुरु
तुहुं गइ तुहुं मइ तुंहिज ताण तुहुं गुरु खेमं कुरु ।
हउं दुहमरभारिअबराउ रानुलनिब्भग्गनु
लीणउ तुह कमकमल सरणजिणपालहि चंगउ ॥ २० ॥
पइं किवि कयनीरोयलोय किवि पावियसुहसय
किवि मइं मंतमहंत केवि किंवि साहियसिवपय ।
किवि गंजिअरिउवग्ग केवि जसधवलिअ भूअल
मइं अवहीरहि केणपाससरणागयवच्छल ॥ २१ ॥
पच्चुवयारनिरीहनाहनिप्पण्ण पयोअण
तुहुं जिण पासपरोवयार करुणिक्कपरायण ।
सत्तुमित्तसमचित्त वित्तिनयनिन्दअसममण
मा अवहीरिअ जुग्गओ वि मइं पास निरंजण ॥ २२ ॥
हउं बहुविहदुहतत्तगत्त तहुं द्रुहनासणपरु
हउं सुयणहकरुणिक्कठाण तुहुं निरुकरुणा कुरु ।
अहुं जिणपासअसामिसालु तुहुं तिहुअणसामिअ
जं अवहीरहि मइं झखंतइय पासनसोहिअ ॥ २३ ॥
जुग्गाजुग्गविभागनाहनहुजोअणतुहसम
भवणुवयारसुहावभाव करुणारससत्तम ।
समविसमह किं घणनएइ भुवि दाहुसमंतउ
इय दुहबंधवपासनाह मइं पालथुणं तउ ॥ २४ ॥
नयदीणहदीणयमुएवि अण्णवि किवि जुग्गय
जं जोइय उवयारु करइ उवयारसमुज्जय ।
दीणहदीणनिहीणजेणतुहनाहिणचत्तउ
तो जुग्गउ अहमेव पास पालहि मइं चंगउ ॥ २५ ॥
अह अण्णवि जुग्गयविसेस किवि मण्णहि दीणह
जं पासवि उवया रुकरइ तुह नाह समग्गह ।
.......................................
किं अण्णंण तं चेव देव मामइं अवहीरह ॥ २६ ॥
तुह पत्थण नहु होइ विहल जिणजाणउ किं पुण
हउ दुक्खिउ निरुसत्तचत्तदुक्कढ्ढ उस्सुयमण ।
तं मण्णउ निमिसेण एण एउ विज्जइ लब्भइ
सच्चं जं भुक्खियवसेण किं उंबरु पच्चइ ॥ २७ ॥

प्रकटितविकटार्थौ सङ्गसाम्राज्यवृध्यै
व्यधित निधिसमानां यश्च वृत्तिं[1] **नवाङ्ग्याः** ॥ २ ॥

---

तिहुअणसामिह पासनाह मइं अप्पपयासिउ
किज्जउ जं नियरूवसरिसुनमुणुंवहुं जं पिउ ।
अण्णु ण जिणजगतुहसमोविदक्खिण्णदयासउ
जइ अवगण्णसि तुं हिज अहह किं होइ सह यासनु ॥ २८ ॥

जइ तुह रूविण किणविपेअ पाइणवेलंविउ
तनु जाणुं जिण पास तुम्ह होउं अंगिकरिउ ।
इअमह इच्छिअ जं न होइ सातुहओहावण
रक्खंतह नियकित्तिणेय जुज्जइ अवहीरण ॥ २९ ॥

एवमहारिहजत्तदेव इयन्हवणमहूसउ
जं अणलिय गुणगहण तुम्ह मुणिजणअणिसिद्धिउ ।
इय मइं पसिय सुपासनाह **थंभणपुर**संट्ठिअ
इय मुणिवर सिरि**अभयदेव** विण्णवइ अणिंदिअ ॥ ३० ॥' इति ।

१. '**चान्द्रे** कुले सद्वनकक्षकल्पे महाद्रुमो धर्मफलप्रदानात् ।
छायान्वितः शस्तविशालशाखः श्री**वर्धमानो** मुनिनायकोऽभूत् ॥
तत्पुष्पकल्पौ विलसद्विहारसद्गन्धसंपूर्णदिशौ समन्तात् ।
वभूवतुः शिष्यवरावनी च वृत्ती श्रुतज्ञानपरागवन्तौ ॥
एकस्तयोः सूरिवरो **जिनेश्वरः** ख्यातस्तथान्यो भुवि **बुद्धिसागरः** ।
तयोर्विनेयेन विबुद्धिनाप्यलं वृत्तिः कृतैषा**भयदेव**सूरिणा ॥
तयोरेव विनेयानां तत्पदं चानुकुर्वताम् ।
श्रीमतां **जिनचन्द्रा**ख्यसत्प्रभूणां नियोगतः ॥
श्रीम**ज्जिनेश्वरा**चार्यशिष्याणां गुणशालिनाम् ।
**जिनभद्र**मुनीन्द्राणामस्माकं चाङ्घ्रिसेविनः ॥
**यशश्चन्द्रगणे**र्गाढसाहाय्यात्सिद्धिमागता ।
परित्यक्तान्यकृत्यस्य युक्तायुक्तविवेकिनः ॥
शास्त्रार्थनिर्णयसुसौरभलम्पटस्य विद्वन्मधुव्रतगणस्य सदैव सेव्यः ।
श्री**निर्वृता**ख्यकुलसन्नदपद्मकल्पः श्री**द्रोणसूरि**रनवद्ययशःपरागः ॥
शोधितवान्वृत्तिमिमां युक्तो विदुषां समूहेन ।
शास्त्रार्थनिष्कनिकषणकषपट्टककल्पबुद्धीनाम् ॥
विशोधिता तावदियं सुधीभिस्तथापि दोषाः किल संभवन्ति ।
मन्मोहतस्तांश्च विहाय सद्भिस्तद्ग्राह्यमाप्ताभिमतं यदस्याम् ॥

तच्छिष्यो **जिनवल्लभः** प्रभुरभूद्विश्वंभराभामिनी-
भास्वद्भालललामकोमलयशःस्तोमः शमारामभूः ।
यस्य श्री**नरवर्म**भूपतिशिरःकोटीररत्नाङ्कुर-
ज्योतिर्जालजलैरपुष्यत सदा पादारविन्दद्वयी ॥ ३ ॥

**काश्मीरा**नपहाय संततहिमव्यासङ्गवैराग्यतः
प्रोन्मीलद्गुणसंपदा परिचिते यस्यास्यपङ्केरुहे ।
सान्द्रामोदतरङ्गिता भगवती वाग्देवता तस्थुषी
धारालामलभव्यकाव्यरचनाव्याजादनृत्यच्चिरम् ॥ ४ ॥

भृङ्गस्तदङ्घ्रिकमले **जिनशेखराह्वः** सूरिस्ततः प्रशमवर्मितकाययष्टिः ।
जिग्ये जगत्त्रयजयप्रयतोऽपि येन वीरव्रतं कलयता रतिजीवितेशः ॥ ५ ॥

वैराग्यं याति रागे भजति विधुरतां क्रोधयोधे विमाने
माने नष्टाभिमाने कपटपटुभटे क्षोभमाप्ते च लोभे ।
पञ्चेषौ कुञ्चितेषौ समिति निजमिति प्रेक्ष्य सैन्यं सदैन्यं
मुक्त्वा येषां जयाशां निभृतमपसृतं मोहराजेन दूरम् ॥ ६ ॥

प्रगुणितकरुणः क्षमया विराजितश्चारुविग्रहस्तदनु ।
अजनि वशीकृतविषयग्रामः **पद्मेन्दुमुनिराजः** ॥ ७ ॥

उत्फुल्लमल्लीप्रतिमल्लकान्तिः कीर्तिर्भ्रमन्ती भुवनेषु यस्य ।
श्रिया समं सौहृदकाङ्क्षयैव मुष्णाति विष्णोरपि कृष्णभावम् ॥ ८ ॥

विश्वत्रयप्रथितकीर्तिलतस्य तस्य शिष्यः प्रशस्यमहि**माभयदेव**सूरिः ।
काव्यं **जयन्तविजयं** रचयांचकार सारस्वतप्रसृमरप्रतिभाविलासः ॥ ९ ॥

---

यदवाप्तं मया पुण्यं वृत्ताविह शुभाशयात् ।
मोहाद्वृत्तिजमन्यच्च तेनागो मे विशुध्यताम् ॥

प्रथमादर्शे लिखिता **विमलगणि**प्रभृतिभिर्निजविनेयैः ।
कुर्वद्भिः श्रुतभक्तिं दक्षैरधिकैर्विनीतैश्च ॥

अस्याः कारणव्याख्या श्रुतिलेखनपूजनादिषु यथार्हम् ।
**दायिकसुतमाणिक्यः** प्रेरितवानस्मदादिजनान् ॥

अष्टाविंशतियुक्ते वर्षसहस्रे शतेन चाभ्यधिके (११२८=A. D. 1072) ।
**अणहिल्लपाटनगरे** कृतेयमच्छुप्तधनिवसतौ ॥' इति ।

अयं **नवाङ्गवृत्तिकृदभयदेवसूरि**र्वैक्रमे ११३५ (A. D. 1079) वत्सरे कीर्तिशेषतां गत इति **प्रबन्धचिन्तामणि**प्रस्तावनैकादशपृष्ठे **दीनानाथात्मजरामच-न्द्र**शास्त्री ।

दिक्करिकुलगिरिदिनकर(१२७८)परिमितविक्रमनरेश्वरसमायाम् ।
द्वाविंशतिशतमानं शास्त्रमिदं निर्मितं जयतु ॥ १० ॥'

इत्य**भयदेवा**चार्यप्रणीत**जयन्तविजयी**यकविप्रशस्तिपद्यदर्शनतो **नवाङ्गवृत्तिक-भयदेवा**चार्यसूरिशिष्यसंताने चतुर्थपट्टधारी श्रीमा**नभयदेव**सूरिर्वैक्रमे १२७८ (A. D. 1221) शरदि एनं ग्रन्थं प्रकटयन् कतममिलामण्डलं मण्डयामासेति न निश्चीयते। एतेनास्य कविवरस्य ख्रिस्तत्रयोदशशतिकापूर्वार्धं सत्तासमय इति बाढमवगन्तव्यम् ।

अस्य हि ग्रन्थस्यैकमेव पुस्तकं श्रीयुत-**श्रावक-हीरालाल-हंसराज**-प्रबन्ध-द्वारोपलब्धम्, तस्यैकस्याधारेण शोधितमुद्रितेऽप्यस्मिन्ग्रन्थे यत्र कुहचनाशुद्धिः स्थिता जाता वा भवेत्तत्र सुहृदयहृदयाः संशोधयन्तु । यतः—

गच्छतः स्खलनं वापि भवत्येव प्रमादतः ।
हसन्ति दुर्जनास्तत्र समादधति सज्जनाः ॥

इति प्रार्थयतः—

**पण्डित-शिवदत्त-काशीनाथौ ।**

# काव्यमाला।

श्रीमदभयदेवविरचितं

## जयन्तविजयम्।

प्रथमः सर्गः।

श्रेयांसि विश्राणयतादजस्रं नाभेयदेवस्य पदाम्बुजं वः।
समस्तसंपन्मधुबद्धरागा यत्र त्रिलोकी भ्रमरीव भाति ॥ १ ॥
शश्वच्चतुर्वर्गफलैः फलन्ती कल्पद्रुमस्यापि यदङ्घ्रिभक्तिः।
सौभाग्यभङ्गीमधरीकरोति शान्तिं स वः शान्तजिनस्तनोतु ॥ २ ॥
स्वच्छायया छन्नजगत्त्रयायाः कीर्तेर्लताया इव भाति कन्दः।
यस्याङ्कशङ्खः स विशेषतोषतोषाय भूयाद्यदुपुंगवो वः ॥ ३ ॥
आशासहस्रं परिपूरयन्त्या मूर्त्या पराभूततरेव कीर्तिः।
यस्य प्रभोर्दूरतरं जगाम क्षेमाय वामेयजिनः स वोऽस्तु ॥ ४ ॥
नखावली यस्य पदोर्विनम्रस्त्रैणनेत्रप्रतिबिम्बभङ्ग्या।
पूजां व्यनक्तीव सरोजपत्रैः स त्रैशलेयस्त्रिजगत्पुनातु ॥ ५ ॥
यस्याङ्घ्रिसेवारसपारवश्यं कुलं विभूतेर्भुवनाद्भुतायाः।
क्षीरार्णवस्येव पयः सुधायाः पुनातु सोऽन्योऽपि जिनेशवर्यः ॥ ६ ॥
निर्नि(र्णि)क्तमुक्तामणिमञ्जुकर्णताटङ्कयुग्मं विरराज यस्याः।
आस्यश्रियं लुम्पदिवोडुचारुचन्द्रद्वयं पातु सरस्वती सा ॥ ७ ॥
प्रसृत्वरामोदगुणप्रबोधं दिशन्ति शिष्यप्रकराम्बुजानाम्।
ये स्पर्धयेवाम्बुजिनीप्रियस्य जयन्तु ते मे गुरवो मुनीन्द्राः ॥ ८ ॥
महाकवीनामपि नव्यकाव्ये दोषः कदाचित्किल संभविष्णुः।
प्रमादनिद्रोदयमुद्रया हि क्रोडीक्रियन्ते सुधियां धियोऽपि ॥ ९ ॥

तद्दोषशङ्कापगमाय काव्ये निजे कृतीशः सुजनो नियोज्य ।
तदीयसंवादवशंवदं हि स्वकाव्यसौन्दर्यविशेषधैर्यम् ॥ १० ॥
आमोदितं यस्य जगद्वरेण्यसौजन्यपुष्पामितसौरभेण ।
स्वस्त्यस्तु तस्मै सुजनाय जाग्रत्सर्वान्यदोषाग्रहणाग्रहाय ॥ ११ ॥
अभ्यर्थितः सोऽपि यशोविलासलास्याय काव्यस्य धुनोति दोषम् ।
समुद्धरत्येव हि वैद्यराजः शल्यं तनोः सौख्यकृते कृतार्थः ॥ १२ ॥
उद्वासयत्यात्मविरूपशब्दैर्यो दुर्जनः काव्यगृहं निविश्य ।
उलूकपक्षीव स दूर एव दोषैकदृष्टिर्विबुधैर्विधेयः ॥ १३ ॥
न दुर्जनस्यानुनयो गुणाय स्वभावदौर्जन्यमलीमसस्य ।
सुगन्धिलक्षैरपि किं सुगन्धीकर्तुं हि शक्यं लशुनं कदापि ॥ १४ ॥
भवेयमस्यापि कृताञ्जलिर्वा यत्काव्यदोषग्रहणोग्रशङ्का ।
सा कापि यस्यास्त्वरितप्रयत्नो यशस्विकाव्याय कवेर्भविष्णुः ॥ १५ ॥
देव्या गिरां लास्यकलाविलासे रसानुगाः कान्तपदप्रबन्धाः ।
भवन्ति चक्रेषु महाकवीनां चित्रं तु सर्वत्र कृतप्रचाराः ॥ १६ ॥
जयन्ति ते सत्कवयो यदुक्त्या बाला अपि स्युः कविताप्रवीणाः ।
श्रीखण्डवासेन कृताधिवासाः श्रीखण्डतां यान्त्यपरेऽपि वृक्षाः ॥ १७ ॥
जयन्तु सर्वेऽपि कवीश्वरास्ते यदीयसत्काव्यसुधाप्रवाहः ।
विकूणिताक्षेण सुहृज्जनेन निपीयमानोऽप्यतिपुष्यतीव ॥ १८ ॥
धर्मार्थकामाः प्रथिताः समोक्षाश्चत्वार एते खलु पूरुषार्थाः ।
चतुर्भुजस्येव भुजा न कस्य विशेषभद्रप्रसरत्प्रमोदाः ॥ १९ ॥
तत्रार्थकामद्वयमैहिकार्थं भवोद्भवत्वेन सतां मतं न ।
जैनस्तु धर्मो हृदि जागरूकः स्यादैहिकामुष्मिकसौख्यहेतुः ॥ २० ॥
कल्पद्रुमाणामिव नन्दनोर्वी वनस्पतीनामिव वारि दाम्भः ।
महाविभूतेरिव कामधेनुर्लावण्यनद्या इव यौवनाद्रिः ॥ २१ ॥
भवोचितानामिव कर्मणां श्रीः कुन्दाभकीर्तेरिव भूरि दानम् ।
संतोषलीलेव मनःसुखानां सुधारसानामिव दुग्धसिन्धुः ॥ २२ ॥

अनन्यसाधारणराज्यमुख्यख्यातश्रियां पूर्णमनोरथानाम् ।
सिद्धाङ्गनासंगमशर्मणां च निबन्धनं श्रीजिनधर्मकर्म ॥ २३ ॥
(त्रिभिर्विशेषकम्)

एतत्प्रभावप्रथितं त्रिलोकीहृद्यत्रिवर्गानुपमप्रकर्षम् ।
वीरव्रतालंकरणं चरित्रं श्रीमज्जयन्तस्य नृपस्य वक्ष्ये ॥ २४ ॥
मध्येऽखिलद्वीपसमुद्रसौधं चञ्चत्सुवर्णाद्रिशिखावतंसः ।
दीपप्रदीपप्रतिमोऽस्ति जम्बूद्वीपः सदालोकविलासलक्ष्मीः ॥ २५ ॥
तस्यावतंसे भरताभिधाने क्षेत्रेऽस्ति देशो मगधाभिधानः ।
कल्याणवृन्दै रुचिराङ्गहारैरिवानिश नृत्यति यत्र लक्ष्मीः ॥ २६ ॥
यत्रत्यकान्तानयनोत्पलश्रीनिरस्तशोभान्यसितोत्पलानि ।
इतीव तापात्सरसां जलेषु लुलन्ति मन्दानिलशीतलेषु ॥ २७ ॥
यत्राद्भुतैर्नूतनधान्यकूटैः परःसहस्रैर्नगराणि भान्ति ।
सुभिक्षराजस्य सदैव काले शैलैरिवोत्तुङ्गतयाभिरामैः ॥ २८ ॥
सर्वत्र सौराज्यबलेन यत्र प्राज्याः प्रजाध्वस्तसमस्तशङ्काः ।
शृङ्गारयन्त्युत्तमदानभोगैः स्वसंपदः पुण्ययशोनिनादैः ॥ २९ ॥
सरोवरैर्यत्र भुवो विभान्ति सरोवराणि स्मितपद्मखण्डैः ।
तैः पद्मखण्डानि च राजहंसैः स्वै राजहंसाः सुगतिप्रचारैः ॥ ३० ॥
हस्तैरिवोच्चैस्तरवः पलाशैश्छायां दधानाः फलसंपदा च ।
पथ्यङ्गिनां पथ्यदनाय यत्र स्वबन्धुबुद्ध्येव भवन्ति भूयः ॥ ३१ ॥
निजैर्गुणैः सारितकामधेनुव्रजा व्रजा यत्र गवां विभान्ति ।
स्वादिष्टदुग्धेन मुधा सुधापि यासां महिष्यश्च मनोहरास्ताः ॥ ३२ ॥
संसारचक्रस्य चकास्ति सारः पद्माकरः शर्मसरोरुहस्य ।
विश्रामभूमी रमणीयताया यः संपदामास्पदमद्भुतानाम् ॥ ३३ ॥
अनीतिशालीन्यपि संश्रयन्ते सस्यानि शश्वत्परमां समृद्धिम् ।
जडाधिवासान्यपि यत्र चित्रं पद्मानि मित्राभिमुखीभवन्ति ॥ ३४ ॥
यस्मिन्ननुग्रामपुरं वधूनां विशुद्धशीलाभरणाग्रिमाणाम् ।
सर्वाङ्गलावण्यमलंकरोति सुवर्णरत्नोत्तमभूषणानि ॥ ३५ ॥

पदे पदे यत्र विचित्रवाप्यः प्रसन्नरूपाश्च विभान्ति कूपाः।
ज्योत्स्नासपत्नेन जलेन पूर्णा माधुर्यदीक्षागुरुणा सुधायाः॥ ३६॥
प्रीतिं परां यत्र नयन्ति लोकं सरांसि चेतांसि च सज्जनानाम्।
अदृष्टपर्यन्ततया श्रितानि गम्भीरतान्यक्कृतवारिधीनि॥ ३७॥
यत्राभिरामाणि विशालशालिक्षेत्राणि संरक्षितुमीयुषीणाम्।
गोपाङ्गनानां मधुरोपगीतैः कृच्छ्राद्युवानः पथि यान्ति पान्थाः॥ ३८॥
विजिष्णुभिर्विष्णुपदीं नदीभिर्वनैः श्रिया ह्रेपितनन्दनैश्च।
शैलैः सुवर्णाचलदत्तह्रीलैर्यः स्वर्गभाजामपि सेवनीयः॥ ३९॥
श्रियामनन्यत्र निवासिनीनामन्योन्यमत्यन्तदिदृक्षयेव।
यः संगतैर्भाति पुरैः समन्तादाश्चर्यचर्यानिलयैः परीतः॥ ४०॥
भोगावतीं भोगिपतिः सुरेन्द्रोऽमरावतीं प्रत्यधिकानुरागम्।
मुमोच चारुत्वमवेक्ष्य यस्याः सा तत्र नाम्नास्ति पुरी जयन्ती॥ ४१॥
रम्याणि हर्म्याणि सुवर्णरत्नमयानि यस्यां बहुभूमिभाञ्जि।
येषां पुरःस्वर्गविमानलक्ष्मीः सूर्यप्रभाचुम्बितचन्द्रिकेव॥ ४२॥
पौरा महेशाः प्रचुराः कुमारा गौर्यः स्त्रियोऽप्यत्र विनायकाश्च।
इतीव कैलाशनगोऽनुरागादावृत्य यां शालमिषेण तस्थौ॥ ४३॥
अर्कांशुसंपर्कविनिर्यदग्निज्वालारुणःस्फाटिकरत्नसालः।
स्वराजराजस्त्रबलानुरागैरालिङ्गितात्मेव विभाति यत्र॥ ४४॥
रम्यावधित्वेन यदीयसालविद्याधरीषु स्थितिमीयुषीभिः।
विद्याधरीभिर्निशि धर्तुमीहांचक्रे करे कन्दुकलीलयेन्दुः॥ ४५॥
समुन्नतं कान्तमिवाम्बुजाक्षीप्राकारमुच्चैः सरसीकरोति।
विराजिलीलालहरीकटाक्षैर्मुक्तावलक्षैः परिखा यदीया॥ ४६॥
लक्ष्म्याः स्वपुत्र्याः सततं वसन्त्याः क्षीरार्णवो यत्र दिदृक्षयेव।
स्नेहातिरेकात्समुपेत्य तस्थौ सुधानिभाम्भःपरिखामिषेण॥ ४७॥
रम्भेव कॢप्तामितकान्तमूर्तिः पणाङ्गनाली सविलासलास्या।
विभाति यस्यां सुरमन्दिरेषु विसारितस्वःपुरकौतुकेषु॥ ४८॥

नेत्रैः सरोजैरिव राजमाना लावण्यपूरैरमृतैरिवोच्चैः ।
कुचैश्च चक्रैरिव सद्विलासैर्यत्रत्यरामाः स्मरकेलिवाप्यः ॥ ४९ ॥
उद्यानवापीषु जलाशयत्वं द्विजाश्रयेषु प्रियविप्रयोगः ।
विलोक्यते राजकरोपमर्दः पद्माकरेष्वेव न यत्र लोके ॥ ५० ॥
जिनेन्द्रहर्म्योपरि शातकुम्भकुम्भावलीषु प्रतिबिम्बितात्मा ।
अनेकमूर्तिः प्रतिभाति भानुर्यस्याः श्रियं द्रष्टुमिवावतीर्णः ॥ ५१ ॥
कस्तूरिकास्थासकवर्णभाजां व्याजेन जैनेन्द्रगृहध्वजानाम् ।
या दत्तपत्रेव समस्त········श्रियं पुरीणामुपरि स्वऋच्छ्या ॥ ५२ ॥
भूयिष्ठमुक्तामणिहेमतारैः कर्पूरपूरैर्मृगनाभिपुञ्जैः ।
दिव्यांशुकाद्यैः कलिता पणाली तदाकराकारधरेव यत्र ॥ ५३ ॥
सुरेशवेषाभरणाङ्गरागवरेण लावण्यतरङ्गिताङ्गः ।
निमेषमात्रेण परं सुरेभ्यो विभिद्यते यत्र जनः समस्तः ॥ ५४ ॥
सचेतनाचेतनचारुभावैरेषैव रेषां(खां) लभते पुरीषु ।
इति स्म वृद्धा बहुदेशभाजो वदन्ति यस्यामसमाद्भुतायाम् ॥ ५५ ॥
कोटिध्वजाग्रैः प्रतिबिम्बितैश्च हर्म्यावलीनां मणिकुट्टिमानि ।
कृतास्पदानीव विभान्ति यस्यां निधानरक्षाभुजगैः स्फुरद्भिः ॥ ५६ ॥
उद्यानलक्ष्मीमधिकप्रकर्षामसंख्यभेदैः सुमनोद्रुमाणाम् ।
विलोक्य यत्र द्युपतिर्बभूव मन्दादरः श्रीमति नन्दनेऽपि ॥ ५७ ॥
तस्यां बभूवाद्भुतविक्रमश्रीः क्षोणीपतिर्विक्रमसिंहसंज्ञः ।
विश्वंभराभारभरं बभार यो विश्रुताशेषगुणोऽपि चित्रम् ॥ ५८ ॥
राजन्वती येन जगत्यजस्रं निजाः प्रजाः पालयता नयेन ।
स्वर्भूरिवेन्द्रेण गुरुप्रशस्यमन्त्रीशमन्त्रेण सुरोचितेन ॥ ५९ ॥
यः कामिनीनां प्रतिभाति कामः पितेव च प्रीतिपदं प्रजानाम् ।
कालः करालो रिपुभूपतीनां कल्पद्रुमश्च प्रणयिव्रजानाम् ॥ ६० ॥
यस्याहवे वैरिकरीन्द्रकुम्भस्थलीगलत्तारकरम्बिताङ्गः ।
रेजे कृपाणोऽरिकुलं जिगीषोर्यमस्य जिह्वेव सदन्तपङ्क्तिः ॥ ६१ ॥

यस्यासिलूना चिरराजजन्यक्षेत्रेषु वैरिद्विपदन्तपङ्क्तिः ।
कीलालसिक्तेषु यशस्तरूणामुद्गच्छतामङ्कुरमालिकेव ॥ ६२ ॥
स्वैराज्यसर्वस्वसुवर्णरत्नहस्त्यश्वदण्डै रिपुमण्डलीभिः ।
मूर्त्तैः प्रतापैरिव ढौक्यमानैर्यः स्वैरविस्तारिगुरुप्रभावः ॥ ६३ ॥
न मार्गणाः केचिदलब्धलक्ष्यां रणेषु दानेषु च यस्य जग्मुः ।
अपूरिताशा न यशोविलासा वरेण्यपुण्योदयकेलयश्च ॥ ६४ ॥
जितेन्द्रियस्योन्नतयौवनेऽपि स्थैर्येण धैर्येण कृतास्पदस्य ।
भूवल्लरीदास्यमतिप्रशस्यं यस्य श्रियः शिश्रियुरश्रमेण ॥ ६५ ॥
शचीव शक्रस्य महेश्वरस्य गौरीव लक्ष्मीरिव माधवस्य ।
श्रीनन्दनस्येव रतिश्च रत्यै तस्य प्रिया प्रीतिमती बभूव ॥ ६६ ॥
पीयूषभानोर्दलसंचयेन चङ्ग[1] यदीयाङ्गमसर्जि धात्रा ।
आनन्दकं लोचनकैरवाणां प्रकामसंतापहरं च येन ॥ ६७ ॥
उल्लासिलावण्यसुधातरङ्गैरङ्गैरनङ्गः सरसैर्यदीयैः ।
चित्रीयते स्त्रैणगुणैस्त्रिलोकीलोकश्च लोकोत्तरकीर्तिकारैः ॥ ६८ ॥
संजीविनी चौषधिरङ्गजस्य विश्रामधामेव हृदः स्वभर्तुः ।
या राज्यऋद्धेरधिदेवतेव लावण्यवल्लेर्नवकन्दलीव ॥ ६९ ॥
रूपेण शीलेन धिया ह्रिया च दाक्ष्येण दाक्षिण्यगुणेन नीत्या ।
प्रीत्या गिरा कोमलया यया च ज्योत्स्नायितं पत्यनुरागसिन्धौ ॥७०॥
मन्त्री हरेर्जीव इवास्य जज्ञे सौधर्मसाम्राज्यमलंकरिष्णुः ।
सुबुद्धिनामा विबुधप्रमोदक्षीरार्णवार्णः क्षणदाभुजङ्गः ॥ ७१ ॥
यस्य क्षोणिपतेः प्रतापदहनज्वालावलीकेलिभिः
सप्ताप्यम्बुधयोऽम्बुबिन्दव इवाशोष्यन्त तेऽपि द्रुतम् ।
पूर्यन्ते स हतारिराजकवधूनेत्राम्बुपूरैः पुनः
स श्रीप्रीतिमतीं प्रियामिव मि(म)हाभोगामभुङ्क्त क्षमाम् ॥ ७२ ॥

इति श्वेताम्बरश्रीमदभयदेवाचार्यविरचिते जयन्तविजयनाम्नि महाकाव्ये शब्दाङ्के प्रस्तावनादिनिरूपणो नाम प्रथमः सर्गः ।

---

१. शोभनमित्यर्थः.

## द्वितीयः सर्गः ।

अथ स्वसौधोपरि सा नृपप्रिया ददर्श हर्म्यान्तररत्नकुट्टिमे ।
हृदीभ्यकान्तां दधतीं निजाङ्गजं सुधामिव स्पर्शमिषेण वर्षुकम् ॥ १ ॥
नभस्थलीव द्युतिमद्विना कृता निशेव शीतद्युतिमण्डलोज्झिता ।
महौषधीवोन्मदवीर्यवर्जिता न सूनुहीना वनिता प्रशास्यते ॥ २ ॥
परप्रकर्षाञ्चितहर्षवर्षिणे सुताय वध्वः सकलाः समुत्सुकाः ।
यदस्य जन्मोत्सवऋद्धिदर्शनैर्भवन्ति सद्यः सुखनिर्मिता इव ॥ ३ ॥
परां जनन्या जनयत्यनारतं महाकुलीनस्तनयो नयाञ्चितः ।
महर्घतामेधयते गुणश्रियो न किं यशोराशिरदम्भसौरभः ॥ ४ ॥
सुनिश्चितं भूमिपतेरपि प्रिया यदा भवेदङ्कनिवेशिनन्दना ।
तटी सुमेरोरिव सर्वदा तदा भजेदहो सर्वसुपर्वसंगमम् ॥ ५ ॥
दुरन्तवन्ध्यात्वनिवृत्तिचिन्तया क्व सौख्यगन्धोऽपि धरेन्द्रसुभ्रुवाम् ।
कुमुद्वतीनां विभया विभा विभोर्विकाससौख्यं हि न जातु वल्गति ॥ ६ ॥
किमन्यदाप्तोत्पतिगौरवं वि(व)धूः प्रियस्य पुत्रैः खलु वृत्तशालिभिः ।
महार्घ्यतां रत्नखनी न किं भजेन्मणिप्रकाण्डैरिति सा व्यचिन्तयत् ॥ ७ ॥
समुत्सुका नन्दनजन्मने जगज्जनप्रमोदाङ्कुरनव्यवृष्टये ।
तदर्थवाञ्छाज्वरवेगदुर्बला बि(व्य)लोक्यथ क्षोणिभृता भृतार्तिना ॥ ८ ॥

(पञ्चभिः कुलकम्)

स भूभुजङ्गः समपृच्छतादृतः कृशोदरीयं कृशता कुतस्तव ।
विशेषशोका(षा) सरसीव मीनकं करोति या मां खलु खेदभाजनम् ॥ ९ ॥
पयोदवाताहतदर्पणस्य किं दधाति सादृश्यमिदं मुखाम्बुजम् ।
किमिन्दुबिम्बद्युति गोचरीभवत्सहस्रपत्राकृतिनी तवेक्षणे ॥ १० ॥
अमत्सरे मत्स्यवधूर्महातपस्थलस्थितेवासि किमाकुला प्रिये ।
कथं कुतोऽप्याहितदुःखशून्यता प्रयातविद्येव च खेचरप्रिया ॥ ११ ॥
अनेकधा व्याधिविबाधितेव किमाधिसंबन्धविधूतधीरसि ।
न पूर्यते कोऽपि मनोरथस्ते मयि स्थिते सुभ्रु निदेशवर्तिनि ॥ १२ ॥

मयाप्यखण्ड्यं तव देवि खण्डितं वचः किमाहृत(?) यमेन केनचित् ।
दुनोति किं स्वप्नकृतोऽपि मानसं प्रिये सपत्नीजनितः पराभवः ॥ १३ ॥
अकोपने किं मयि कोप एष ते तनोति यः प्राणितसंशयं मम ।
असौमनस्ये किमपीह कारणं द्रुतं प्रिये ब्रूहि यदाकुलोऽस्म्यहम् ॥ १४ ॥
दिवापि सा शारदचन्द्रचन्द्रिका भ्रमं दधाना दशनांशुभिस्ततः ।
इति स्वदुःखं नृपतेर्व्यजिज्ञपद्भिषग्वरस्येव रुजं रुजातुरः ॥ १५ ॥
न देवपूर्वोदितदुःखदुर्दशालवोऽपि लब्धावसरस्तनौ मम ।
तव प्रसादेन दिनेश्वरोदये नभस्तले वा क्व तमिस्रसंभवः ॥ १६ ॥
सुखैरशेषैः सुखिनीषु मुख्यता ममेश शच्या अपि चित्तहारिणी ।
प्रसादतस्ते किमपूर्णमस्ति मे सुतं विना त्वेतदरुंतुदं हृदः ॥ १७ ॥
कृती निराकर्तुमिदं तु लाञ्छनं त्वमेव मे दुःसहसाहसप्रिय ।
निमेषमुक्तां कुरुते हि पद्मिनीं न पद्मबन्धोरपरः कदाचन ॥ १८ ॥
वसुंधरोद्धारधुरंधरेण मां विधेह्युपायेन सुतेन भूषिताम् ।
सदोहदेनेव लतां फलाञ्चितामिदं हि सारं किल सर्वसंपदाम् ॥ १९ ॥
इति प्रियाया वचनेन भूपतेर्मनोन्तरे दाव इवानिलाद्वने ।
अपुत्रता दुःखमवर्धताधिकं चकार चिन्तां स ततस्तदिच्छया ॥ २० ॥
विना विनीतेन सुतेन गेहिनां कुलं गृहं शून्यमनूनदुःखदम् ।
क्रमेण नश्यन्ति च सर्वसंपदः स्थिरं निरालम्बमहो न किंचन ॥ २१ ॥
अनन्यसाधारणवैभवोद्भवैः सुखैः सदा दुर्ललितोऽपि मानवः ।
अपुत्रजन्मप्रभवाभिबाधितो न कोटराग्निर्विटपीव नन्दति ॥ २२ ॥
वरं दरिद्रोऽपि सनन्दनो जनस्तदीक्षणानन्दतरङ्गिलोचनः ।
न शक्रतुल्योऽपि समृद्धिभिः परः पराङ्मुखत्वेन विधेरनात्मजः ॥ २३ ॥
जनेऽप्यपुत्रस्य गतिर्न विद्यते क्षयं प्रयाति क्रमशश्च कीर्तनम् ।
इति प्रवादः खलु दुःसहः सतामपुत्रिणां भूप विलोप्य संपदाम् ॥ २४ ॥
इतोऽतिदुःखात्प्रगुणं भवान्तरस्थितौ प्रियायाः खलु भावि जीवितम् ।
ममासुभिः सार्धमतः सुतेच्छया कमप्यवन्ध्यं विदधेऽद्य साहसम् ॥ २५ ॥

समुद्रपर्यन्तमहीमहीपतिः कृतावहित्थक्षणमुल्बणोद्यमः(?) ।
गिरा समाश्वासयदात्मवल्लभां कुमुद्वतीं चन्द्रिकयेव चन्द्रमाः ॥ २६ ॥
भवन्ति पुण्योदयतः कदाचन स्ववाञ्छितानि द्रुतमेव देहिनः ।
उपायतो वा स्वकुलाधिदेवतामतः समाराधय भूरिभक्तिभिः ॥ २७ ॥
अनेकशोऽभीष्टफलप्रदायिनी विलोकिता निर्मलभक्तितस्तथा ।
कुलस्य नः कल्पलतेयमर्चिता मनोरथं ते सफलं करिष्यति ॥ २८ ॥
प्रियप्रियालापसुधारसोर्मिभिर्निरस्तसंतापभरा बभूव सा ।
तथैव सर्वं विदधे प्रियं वचः प्रियोपदिष्टं तनुते हि नात्र कः ॥ २९ ॥
दिवेन्दुबिम्बद्युति गण्डमण्डलं स्ववामहस्त(स्ते) दधती परे दिने ।
नृपेण पृष्टाकथयत्तदर्चनां सुधास्य विद्यामिव बीजवर्जिताम् ॥ ३० ॥
निवेश्य संदेहपदेऽपि जीवितं प्रिये प्रियं ते त्वरितं करोत्यदः ।
न चेज्जनोऽयं ज्वलने प्रवेशतः पतङ्गतां याति तदा विनिश्चितम् ॥३१॥
इति प्रतिज्ञावचनादमुष्य सा मुमूर्छ वज्राभिहतेव तत्क्षणम् ।
पपात च च्छिन्नलतेव भूतले किमद्भुतं प्रेमवतामिदं हि वा ॥ ३२ ॥
अथेतिकर्तव्यतयाकुलात्मना निजप्रियेणाङ्कगताभ्यषेचि सा ।
समूर्तिभिः प्रेमरसैरिवाश्रुभिस्ततः परं चन्दनशीतवारिभिः ॥ ३३ ॥
मुहुः प्रियायाः क्षितिपाञ्चलानिलैर्जगाम मूर्छा नृपतेः सहार्तिभिः ।
सचेतना जातवती सती ततो जगाद साश्रुर्निजजीवितेश्वरम् ॥ ३४ ॥
नरेन्द्र जीयाः कुलशैलजित्वरो निजायुषा नन्द सुरेश्वरश्रिया ।
अमङ्गलं तेऽपहरन्तु देवतास्तमांसि लोकस्य रवेरिव प्रभाः ॥ ३५ ॥
विभो भवज्जीवितशंसयार्जितं सुतस्य जन्मापि न मेऽवभासते ।
भवेच्छिदा येन सकर्णकर्णयोर्न तेन हेम्नापि खलु प्रयोजनम् ॥ ३६ ॥
उरस्थले स्थास्यति भर्तुराभवं(?) स्फुरत्प्रभाहारलतेव हारिणी ।
न्यवेवि(?)देहोद्भवलक्षणैरिदं समस्तसारङ्गदृशां विलक्षणैः ॥ ३७ ॥
भविष्यतीयं क्रमशः सुतान्विता तातेन साम्राज्यवता त्वदङ्गजा ।
अभून्निमित्तज्ञवचः पुरः पितुस्तवेति धात्र्या जगदे नृपप्रिया ॥ ३८ ॥
(युग्मम्)

स्वभर्तुरिष्टा सुचिरं चिरायुषो भविष्यतीयं नृपनाथ नन्दना।
सखी प्रियास्या जिनराजभाषिता पुरः सखेदस्य च भूभृतोऽब्रवत् ॥ ३९।
नृपोऽप्यवादीत्त्यज दुःस्थतां प्रिये मनोरथं पूर्णमिमं विभावय।
अथैष केनाप्युदितं मुदो भरादुपाशृणोत्सिद्धमिदं न संशयः ॥ ४० ॥
वराश्वहेषां गजराजगर्जितं सतूर्यनादं शुभशङ्खनिस्वनम्।
अदक्षिणाक्षिस्फुरणं प्रियोदितं तदाशृणोच्छाकुनिकाग्रणीरसौ ॥ ४१ ॥
ममेष्टसिद्ध्यै शकुनावलिः शुभा दिवेव विद्युज्जलदस्य वृष्टये।
निवेदवे(य)द्या इति हर्षनिर्भरं यशोनिधिः प्राप सभां स भासुराम् ॥४२॥
महार्द्धिकैरिन्द्र इवेन्द्रसंनिभैः स सेवितः संसदि मण्डलेश्वरैः।
ननन्द कुर्वन्ति न कं प्रसृत्वराः सविस्मयस्मेरमुखाम्बुजं श्रियः ॥ ४३ ॥
अथ स्वभर्त्तुर्द्युमणेः समागमेऽरुणाङ्गशोभां दिगवाप वारुणी।
समेत्य सख्येव च संध्ययाद्भुतं कृताङ्गरागेव नवीनकुङ्कुमैः ॥ ४४ ॥
दिनावसाने दिनरत्नमण्डलं निपातमाप द्रुतमस्तभूभृतः।
दुरत्ययं कालविपाकमीयुषः स्थितिः स्थिरा नोच्चपदश्रियोऽपि हि ॥ ४५ ॥
अथाम्बुधेरम्भसि भानुमण्डले निलीयमानेऽरुणपङ्कजत्विषि।
दिशां मुखेभ्यस्तदनु प्रधाविता मधुव्रतव्रातनिभा तमस्ततिः ॥ ४६ ॥
निजासु(जांशु)नाशेऽपि नितान्तनिर्मलः कृतज्ञतां मुञ्चति नैव कश्चन।
समुन्नतिं भानुमताधिरोपितः सहैव तेनास्तमियाय वासरः ॥ ४७ ॥
खरांशुतीव्रातपपाततापतः सुरस्रवन्त्यां जलकेलिकारिभिः।
धुतस्य दिग्दन्तिभिरम्भसो भृशं कणा इव व्योमनि भान्ति तारकाः॥४८॥
अवाप तारानिकरं परां श्रियं नभस्तलेऽवाप्य तमांजि(मोऽञ्ज)नप्रभम्।
किमङ्ग लाटीकचसंचयेऽञ्चितं न जातिमाल्यं भजतेऽद्भुतां लिपिम् ॥४९॥

रम्भाविभ्रमपुण्यपण्यवनितारब्धैः स तूर्यत्रिकै-
र्मङ्गल्यैः कृतकौतुकाद्भुतरसैः श्रोत्रामृतस्यन्दिनी।
रम्या नम्रनरेश्वरोदितजयारावेण सायंतनी
संध्या तस्य नरेश्वरस्य शुशुभे प्रोल्लासितारत्रिका ॥ ५० ॥

अथ पृथुयशाः सर्वं लोकं विसृज्य स सत्वरं
नरपतिमहासिद्धेः सिद्धाववन्ध्यधियां निधिम् ।
स्वहितविदुरः स्वं मन्त्रीशं सुबुद्धिमपूपुज-
द्गुरुरिव यतः पूज्यो मन्त्री नृपस्य विवेकवान् ॥ ९१ ॥
सिद्धिः साहसकर्मकर्मठधियामेवेप्सितानामिति
क्ष्मापस्तत्र समुत्सहिष्णुहृदयस्तस्याग्रतः श्रीमतः ।
मन्त्रीशस्य जगाद गौरवपरस्तां स प्रतिज्ञां यतः
क्षोणीन्द्रस्य सदैव मन्त्रणविधौ धौरेयता मन्त्रिणाम् ॥ ९२ ॥

इति श्वेताम्बरश्रीमदभयदेवाचार्यविरचिते जयन्तविजयनाम्नि महाकाव्ये श्रीशब्दाङ्के पुत्रचिन्तादिनिरूपणो नाम द्वितीयः सर्गः ।

---

## तृतीयः सर्गः ।

ततः स राजशार्दूलं मूलमन्त्री व्यजिज्ञपत् ।
त्वत्प्रतिज्ञाम्बुधिर्देव दुस्तरेभ्योऽपि दुस्तरः ॥ १ ॥
नमस्कारः परं तत्र श्रीपञ्चपरमेष्ठिनाम् ।
प्रयात्यनन्यसामान्ययानपात्रसगोत्रताम् ॥ २ ॥
किं चायं विधिवद्ध्यातः सर्वकर्मसु कर्मठः ।
कल्याणकदलीकन्दस्यन्दमानः सुधारसः ॥ ३ ॥
पूरयत्याशु दुष्पूरमपि देव मनोरथम् ।
स्वदोहदः करोत्येव द्रुममाढ्यं फलश्रिया ॥ ४ ॥
तदस्य शृणु माहात्म्यं गृहाण विधिना च तम् ।
धनावह इव श्रेष्ठी येनासोष्ट फलोदयम् ॥ ५ ॥
कौतुकेनासृजद्वेधा भुवि स्वर्गमिवापरम् ।
यत्सर्वाद्भुतमादाय श्रीमत्पृथ्वीवरं पुरम् ॥ ६ ॥
शक्रेणापि कृताशङ्कबाहुदण्डबलो बलः ।
तत्र राजा प्रिया तस्य पद्मा पद्मेव देवता ॥ ७ ॥
तत्रैवासीद्धनश्रेष्ठी श्रीदश्रीपरमार्हतः ।
श्रीमती श्रीमती कान्ता सुतस्तस्य धनावहः ॥ ८ ॥

महासार्थेन सोऽन्येद्युः प्राचलत्कुण्डिनं पुरम् ।
मासेन प्राप कारायाः(?) प्रदोषमिव चन्द्रमाः ॥ ९ ॥
पुष्पोद्गम इवाद्यायमत्र पुण्यतरोर्मम ।
सुवर्णकोटयो लाभः पण्यस्यातिजहर्ष सः ॥ १० ॥
पृथ्वीं प्रीणयितुं पीतवारिर्वारिनिधेरिव ।
आत्तपण्योऽथ स श्रेष्ठी ततोऽम्भोद इवाचलत् ॥ ११ ॥
शाखान्तरेषु वृक्षाणां बिभ्रते पुष्पविभ्रमम् ।
संचरन्त्यश्चिरं यत्र तारास्तारोज्ज्वलप्रभाः ॥ १२ ॥
शङ्के संतापकत्वेन दिवाकरकरोत्करः ।
प्रवेशं यत्र नाप्नोति निश्छिद्रद्रुमपल्लवैः ॥ १३ ॥
यस्मिन्कटाक्षयन्तीव सरांसि क्षीरसागरम् ।
नीलोत्पलदलैर्लोलरोलम्बपरिचुम्बितैः ॥ १४ ॥
धर्मध्यानसुधापानकायोत्सर्गविधायिनाम् ।
महातपस्विनां यत्र पावित्र्यं पादरेणुभिः ॥ १५ ॥
समस्तवनराजीनां साम्राज्यमिव वल्गति ।
यस्मिन्यमोपमैर्भिल्लैर्भयानां च महावने ॥ १६ ॥
तत्रत्यासन्नवर्तिन्यां वर्तमाने प्रयाणके ।
धनप्राणहराः पेतुः सायं सार्थेऽथ तस्कराः ॥ १७ ॥
(षड्भिः कुलकम्)

उपस्थिते धनप्राणसंशये कार्यवेदिनः ।
रक्षन्ति जीवितं जीवन्नरो भद्राणि पश्यति ॥ १८ ॥
इत्यदृश्यपटेनेव नैशेन तमसावृतः ।
श्रेष्ठी सार्थजने नष्टे नंष्ट्वा तत्राविशद्वने ॥ १९ ॥
कामं कामेन कामी च दिग्मोहेन कृतान्धधीः ।
स बभ्राम चिरं तत्र दरिद्रस्येव मानसम् ॥ २० ॥
स्वधर्मारामम‍ासेक्तुं संवेगामृतकूपतः ।
अरघट्टघटीमाला यस्याभाज्जपमालिका ॥ २१ ॥

तं सिद्धिप्रेयसीलाभचिन्तयेव कृशं भृशम् ।
तपसा स मुनिं तत्र मूर्तं पुण्यमिवैक्षत ॥ २२ ॥ (युग्मम्)
नमस्कृत्य मुनिस्तेन पपृच्छे किं तव प्रभो ।
ध्यानाधीनधियो ध्येयं ततः स प्रत्यपीपदत् ॥ २३ ॥
परमेष्ठिनमस्कारः शिवाय ध्यायते मया ।
मन्त्रोऽयं विधिना ध्यातः सर्वदा सर्वकामदः ॥ २४ ॥
नरासुरसुरेन्द्राणामपि साम्राज्यसंपदः ।
नमस्कारमहामन्त्रद्रुमस्य कुसुमोद्गमः ॥ २५ ॥
काञ्चनाचलचूलेव स्थिरा यस्य नमस्कृतिः ।
रतिस्तस्य तु सान्निध्ये देवानामपि जायते ॥ २६ ॥
नमस्कारप्रभावेण प्रभवन्ति न जन्तुषु ।
क्रूरा गजेन्द्रसिंहादिरक्षोदावानलादयः ॥ २७ ॥
श्रुत्वेति तत्र वर्द्धिष्णुश्रद्धासंबन्धबन्धुरः ।
तृषार्त इव पीयूषं विधिना स तमाददे ॥ २८ ॥
प्रणम्य पादयुगलं गुरोराशीर्वचस्ततः ।
धर्मलाभं स लब्धाग्रे चचाल शकुनेरितः ॥ २९ ॥
ऐरावतं करोत्क्षेपैर्गजं तर्जयतीव यः ।
धावते दिक्षु साक्षेपं जिघांसुरिव दिग्गजान् ॥ ३० ॥
भियेव यस्य नायाति भूतलेऽभ्रमुवल्लभः ।
कदापि कौतुकेनापि क्रीडितुं मानसाद्रिषु ॥ ३१ ॥
मदाहूतालितुमुलैः प्रध्वनज्जयदुन्दुभिः ।
साश्चर्यशौर्यसाम्राज्यं राजेवोच्चैर्बिभर्ति यः ॥ ३२ ॥
घनाघनो जलेनेव मदौघेनाथ वर्षकः ।
क्रुद्धः कुतोऽपि तं हन्तुं व्यालः काल इवाययौ ॥ ३३ ॥
(चतुर्भिः कलापकम्)
परमेष्ठिनमस्कारमन्त्रस्मृत्या यथाविधि ।
तेनास्तम्भि स दुःस्तम्भिस्तम्भयुक्त्येव पारदः ॥ ३४ ॥

यया····वसरः किंचिन्न्यञ्चितान्यसरस्सयम्(?) ।
तमेव मत्तमातङ्गमारुह्यासह्यविक्रमम् ॥ ३५ ॥
पायं पायं पयस्तस्य स्नायं स्नायं च तत्तटे ।
अमृतच्छायवृक्षाढ्ये स विशश्राम सश्रमः ॥ ३६ ॥
कुर्वन्निव जगत्कम्पं क्ष्वेडया क्षिप्रमेव हि ।
गाढपुच्छच्छटाछोटैर्भूपीठं पाटयन्निव ॥ ३७ ॥
नारङ्गकदलीमुख्यफलैरतिसुधारसैः ।
तं कृताहारमाहन्तुं तत्र सिंहः समाययौ ॥ ३८ ॥ (युग्मम्)
स नमस्कारमाहात्म्यात्ततो दूरे पलायत ।
प्रज्वलज्वलनज्वालाजालेनैव करालितः ॥ ३९ ॥
वर्द्धयन्निव फूत्कारैर्विषज्वालां मुखेऽद्य ताम् ।
कालः क्रौर्येण कान्त्या च दुष्टं दुष्टोऽहिराययौ ॥ ४० ॥
सर्पोच्चाटनमन्त्रेण निर्जितोर्जिततेजसा ।
परमेष्ठिनमस्कारेणैष तं दूरमक्षिपत् ॥ ४१ ॥
जज्वालाग्रेऽस्य दावाग्निः क्षयकालानलोद्धुरः ।
तत्र पञ्चनमस्कारस्मृत्या घनघटायितम् ॥ ४२ ॥
तदग्रे राक्षसस्तस्य भक्षणाय समुद्यतः ।
सोऽपि मन्त्रादितोऽनश्यद्यदयं सर्वभीहरः ॥ ४३ ॥
परमेष्ठिनमस्कारभक्तिर्वल्लीव मानसे ।
उल्लसन्ती फलं दत्ते जन्तोश्चित्तं जगत्स्वपि ॥ ४४ ॥
श्रीनमस्कारमन्त्रोऽयं कण्ठे श्वास इवानिशम् ।
यस्यासीद्द्विवधूकण्ठे स कण्ठाभरणायते ॥ ४५ ॥
परमेष्टिनमस्कारमन्त्रमाहात्म्यमूर्जितम् ।
कः संख्यातुमलंभूष्णुरिति चित्ते व्यचिन्तयत् ॥ ४६ ॥
जङ्गालः प्रचचालाथ स श्वशुरकुलं प्रति ।
प्रथमे यामिनीयामे ययौ मेरुनिभं नगम् ॥ ४७ ॥ (युग्मम्)

कौतुकेनारुरोहैनं शुश्राव च वचः पुरः ।
कस्यापीति स्मरस्मेरविकारविधुरं मुहुः ॥ ४८ ॥
मदङ्गीकारतो विद्धि विधेयं मां मृगेक्षणे ।
त्रातारं वा स्मराभीष्टं न यावन्मार्यसे मया ॥ ४९ ॥
तदीयोग्रगिरा भीरुः कम्पमानवपुर्लता ।
श्रीजिनेन्द्रः परं त्राणं जगादेति ममात्र सा ॥ ५० ॥
स स्त्रीं शस्त्रीप्रहारेण प्रहर्तुं तां समुद्यतः ।
कामान्धास्त्यक्तमर्यादाः किं किं पापं न कुर्वते ॥ ५१ ॥
तेन बद्धः स्वमन्त्रेण स्वबन्धैर्मृत्युबन्धुभिः ।
सतामार्तपरित्राणप्रगुणाश्चित्तवृत्तयः ॥ ५२ ॥
तं तथा वीक्ष्य सान्यच्च श्रेष्ठिनं सनमस्कृतिम् ।
श्रावकत्वेन तस्याभूद्विश्वासवशमानसा ॥ ५३ ॥
आकुलप्राणयाप्युच्चैर्मृग्येव व्याधबद्धया ।
त्वया नष्ट····तेनार्के इवास्मर्यत यज्जिन (?) ॥ ५४ ॥
तद्धन्यासि त्वमेवैका नृत्यतीव कराम्बुजे ।
तव स्वर्गापवर्गश्रीः सेत्थं तेनापबृंहिता ॥ ५५ ॥ (युग्मम्)
भद्रे त्वं कासि किं चायं जिघांसुस्त्वामुपस्थितः ।
पृष्टे तेनेति सा सारप्रेमोद्गारगिरावदत् ॥ ५६ ॥
रत्नगर्भाशिरःशुभ्रपुष्पशेखरविभ्रमे ।
रौप्ये भूभृत वैताढ्येऽस्तीह राजपुरी पुरी ॥ ५७ ॥
तत्र विद्याधरेन्द्रोऽस्ति जयस्तस्य बृहस्पतिः ।
नाम्ना बुद्ध्या च मन्त्रीशः पत्नी तस्य मणिप्रभा ॥ ५८ ॥
तयो रत्नप्रभां पुत्रीं मामयं मन्दिरादथ ।
रागैकदृष्टिरानिन्ये स्वर्णमालामिव द्विकः ॥ ५९ ॥
याचमानो वराहाय[१] चाटुकारशतैरयम् ।
ममानुत्तरदानेन दुष्कर्मेति प्रचक्रमे ॥ ६० ॥

---

१. 'विहाराय' इति भवेत्.

गाढानुरोधादस्याः स्वां सार्थपालिकथामथ ।
जगाद किं न वाच्यं हि सद्भावाञ्चिततेजसाम् ॥ ६१ ॥
इत्थं मिथः स्ववृत्तान्ते कृते कर्णरसायने ।
ताभ्यां विलोक्य दिव्यर्द्धिस्तत्र विद्याधराधिपः ॥ ६२ ॥
उत्थाय पादयोर्लग्ना स्वपितुस्तस्य कन्यका ।
उच्चैराक्रन्द शब्दं च स्वान्तर्दुःखमिवामुचत् ॥ ६३ ॥
आलिङ्ग्य स्वाञ्चलेनास्याः प्रोन्ममार्ज मुखाम्बुजम् ।
अङ्के कृत्वाथ तां प्राह पुत्रि धीरा भवाधुना ॥ ६४ ॥
व्यज्ञपीदं तया तात कोऽप्ययं मयि वत्सलः ।
ररक्षेऽरिकराद्येन सिंहास्यादिव गौरहम् ॥ ६५ ॥
तत्तातैतद्गुणक्रीतीं विद्धि मामिति तद्गिरा ।
सर्वज्ञोक्तवरायास्मै स सन्मानं सतां ददे ॥ ६६ ॥
सापराधमिव श्रेष्ठिवाक्यान्मन्त्री तमत्यजत् ।
सतां तुल्या मनोवृत्तिरुपकार्यपकारिषु ॥ ६७ ॥
प्रातरिन्दुरिवादृश्यपरिवारस्त्वमद्य किम् ।
मन्त्रिणः श्रुतपूर्वेदं श्रेष्ठीश्रेष्ठः[1] प्रतिष्ठया ॥ ६८ ॥
उवाच भिल्लधाटीतः स्वसार्थोल्लुण्ठनादिकम् ।
ततो मन्त्रिपतिः पल्लीमरुणत्सैन्यपेन सः ॥ ६९ ॥
कालरात्र्येव दृष्टा सा ग्रस्तेव समवर्तिना ।
ददृशे भिल्लनाथेन निर्नाथेव तदाकुला ॥ ७० ॥
अथ संधानमाधाय सह सेनाधिपेन सः ।
यदात्तं सार्थसंबन्धि तत्तस्य व्यतरद्भिया ॥ ७१ ॥
सर्वस्वेनापि संमान्य सेनानाथं निजेन सः ।
तेन सार्थेन चोपेतः श्रीमन्मन्त्रिपतिं ययौ ॥ ७२ ॥
महार्थोपायनैर्नत्वा मन्त्रिनाथमथार्चयत् ।
तेन संमानितः सोऽपि पल्लीं पल्लीपतिर्ययौ ॥ ७३ ॥

१. 'वीयश्रेष्ठिश्रेष्ठः' इति भवेत्.

ययौ यानमथारुह्यासह्यवेगजितानिलम् ।
सह जामातृकन्याभ्याममात्यः स्वपुरं प्रति ॥ ७४ ॥
पर्यणैषीदपर्यन्तगर्जदुत्सववैभवाम् ।
तां श्रेष्ठी मन्त्रिणा दत्तसर्वस्वकरमोचनः ॥ ७५ ॥
ततः संप्रेषितस्तेन गौरवात्स्वसुतान्वितः ।
दूरेऽनुगम्य स क्षिप्रं ययौ राजपुरीं प्रति ॥ ७६ ॥
मार्गं दुस्तरमुत्तार्य श्रेष्ठी पोत इवाम्बुधिम् ।
पृथ्वीपुरं ससार्थोऽगात्किं न श्रेयो नमस्कृतेः ॥ ७७ ॥
अथाभूत्स नमस्कारमन्त्रे भृङ्ग इवाम्बुजे ।
लीनः सिद्धिमधुश्रद्धावृद्धिबन्धुरमानसः ॥ ७८ ॥
जिनस्य भक्तिपूजाभ्यां मन्त्रसिद्धिमवाप सः ।
साश्चर्यशौर्यपुण्याभ्यां राजेवाशु जयश्रियम् ॥ ७९ ॥
सुदृष्टिरेकदा कश्चित्सुरः श्रेष्ठिनमब्रवीत् ।
वश्यो मन्त्रादितः श्राद्ध[1] तवाभीष्टकरोऽस्म्यहम् ॥ ८० ॥
तत्रत्यपृथिवीपालस्तार्तीयीकदिनेन सः ।
व्यनश्यदसुतो रोगादामकुम्भ इवाम्बुतः ॥ ८१ ॥
पञ्चदिव्यैर्गजेन्द्राद्यैः सत्कृतः स कृतो नृपः ।
नमस्कारमहामन्त्रात्किं नोच्चैः प्राप्यते पदम् ॥ ८२ ॥
बभौ तस्यासनं व्योम्नि व्योमरत्ननिभं तदा ।
देव्यश्चामरधारिण्यो दिव्यच्छत्रकराः सुराः ॥ ८३ ॥
नाकिनाथमिव क्षोणीक्षेमायेत्थमुपस्थितम् ।
श्रुत्वा नृपं भयाद्भूपास्तमेवान्ये विभुं व्यधुः ॥ ८४ ॥
गजाद्युपायनीकृत्य स्वकन्यास्तस्य ते ददुः ।
पर्यणैषीत्स रूपश्रीह्रेपिताप्सरसस्ततः ॥ ८५ ॥
एकच्छत्रं महाराज्यं न मुदेऽस्य तथाभवत् ।
यथा श्रीमज्जिनेन्द्रोक्तधर्मप्राप्तिः सुदुर्लभा ॥ ८६ ॥

---

१. हे श्रद्धासमन्वित.

भोगैर्दुर्ललितस्यास्य देवानामपि दुर्लभैः ।
श्रीनन्दनवनस्येव संतानश्रीरवर्धत ॥ ८७ ॥
अथान्यदा नमस्कारमन्त्रदं स्वगुरुं मुनिम् ।
तत्रागतं ववन्देऽसौ शुश्रावास्य च देशनाम् ॥ ८८ ॥
राजंस्त्वं राजसे शुद्ध सम्यक्त्वमणिभूषणः ।
अङ्गैरिव गणाधीशस्तथा द्वादशभिर्व्रतैः ॥ ८९ ॥
स्वर्णरत्नप्रियैर्भूप रत्नसानुविजित्वरैः ।
जिनेन्द्रमन्दिरैः पृथ्वीमण्डलं यदमण्डयः ॥ ९० ॥
प्रावर्त्यन्त त्वया तत्र नानाश्चर्यमहोत्सवाः ।
वरेण्यपुण्यपीयूषसत्राणीव शिवाध्वनि ॥ ९१ ॥
श्रुतस्य श्रोत्रिणी श्रोत्रे नेत्रे जैनास्यनर्तिनी ।
कृतार्थे सार्थसामर्थ्ये कृतैरिष्टैः स धर्मिणाम् ॥ ९२ ॥
विश्वरङ्गे जिनाधीशशासनोन्नतिनर्तकीम् ।
नरीनर्तयितुं नृत्याचार्यकं तव निर्मलम् ॥ ९३ ॥
सर्वाणि धर्मकर्माणि भूप श्राद्धोचितानि ते ।
श्रद्धाधिक्येन वर्धन्ते दानेनेव यशःश्रियः ॥ ९४ ॥
अत्र मद्वरधर्मेऽस्मिन्नित्थं तदपि भण्यते ।
राजहंस सदा राजहंसः स्या संघमानसे(?) ॥ ९५ ॥
इत्थं कर्णातिथीकृत्य तथ्यां पथ्यां गिरं गुरोः ।
ववन्दे तं ततः सापि विजहार यथासुखम् ॥ ९६ ॥
(सप्तभिः कुलकम्)

जिनेश्वराणां रथतीर्थयात्रा कल्याण्यकाद्युत्सवपुण्यकृत्यैः ।
तद्राज्यलक्ष्मीः सुभगं भविष्णुरिष्टैः फलैः कल्पतरोर्लतेव ॥ ९७ ॥

काले काले नयमिव चतुर्धापि धर्मं स चक्रे
दध्रे शक्तित्रयमिव सुधी धाम रत्नत्रयं च ।
तेनैवायं परिमलभरेणापि मन्दारशाखी
लोकं लोकम्पृणगुणगुरुर्वासयामास शश्वत् ॥ ९८ ॥

स त्रिवर्गपरभागभूषणः प्राज्यसौख्यमनुभूय सूनवे ।
दत्तराज्यविभवो दिवं ययौ द्वीपमन्यमिव सायमर्यमा ॥ ९९ ॥

स तत्र रम्यवैभवं सुरेन्द्रराज्यमन्वभूत् ।
ततश्च्युतः क्षमापतिः कृतव्रतः शिवं ययौ ॥ १०० ॥

नमस्कृतेरित्थमसौ महीपोऽनुभूतपूर्वी च फलं निशम्य ।
स संप्रदायं जगृहे नृपस्तां सुधां पिबेद्वा नहि कः सतृष्णः ॥ १०१ ॥

मन्त्रस्य तस्य रुचिरप्रचुरप्रभावैः
सर्वत्र विश्ववलयैरपरैरगम्यः ।
श्रीमान्समस्तजनतापरिभूतिबद्ध-
कक्षैः करैरिव रविस्तिमिरैरथासीत् ॥ १०२ ॥

इति श्वेताम्बरश्रीमदभयदेवाचार्यविरचिते जयन्तविजयनाम्नि महाकाव्ये श्रीशब्दाङ्के नमस्कारप्रभाववर्णनो नाम तृतीयः सर्गः ।

---

## चतुर्थः सर्गः ।

तदनु भास्करसोदरदीपिकाद्युतिकदम्बविडम्बितवासरम् ।
सुर इवोच्चविमानममानवं शयनमन्दिरमाप महीपतिः ॥ १ ॥

इह स हंसशुभच्छदतूलिकं सुरतरङ्गवतीपुलिनोपमम् ।
विहितसांध्यविधिः सुधियां गुरुः सुरवरोचिततल्पमशिश्रियत् ॥ २ ॥

समुपगूढमनाः सुतचिन्तयेत्यलममर्षभयादिव निद्रया ।
क्षणमपीक्षणगोचरचारितानविदधेऽस्य निशेव दिवामणेः ॥ ३ ॥

ग्रहबलैः शुभशंसिनमाप्तवान्कथमपीह निशीथमसौ तदा ।
पृथुपचेलिमपुण्यवतां स्वयं किमनुकूलमुपैति च हेलया ॥ ४ ॥

अथ चलन्नचला रमणस्तदा चतुरबुद्धिरदृश्यत नापरैः ।
नयनराजददृश्यकराञ्जनो जन इवाध्वनि भूरि नराकुले ॥ ५ ॥

असितपट्टमयांशुकवेषवानसिलताकलितैककराम्बुजः ।
स्वपुरसालमलङ्घ्यमलङ्घयद्द्रुगुमिवाशु गिरेर्नवकेसरी ॥ ६ ॥

किमपि तत्र विनोदितलोचनः फलितपादपदेवकुलादिषु ।
पवनवेगगतिः स परिभ्रमन्समसृणोत्करुणं ध्वनिमग्रतः ॥ ७ ॥
गुरुकृपारसपूरितमानसस्तदनुसारमसावपरिश्रमः ।
नरपतिर्मरुतोऽप्यधिपङ्गुता व्रतमिवाङ्घ्रिजवेन ददद्ययौ ॥ ८ ॥
मृतककोटिकरालकलेवरप्रचुरदुःसहगन्धभरावहे ।
अभिमुखागतगन्धवहैर्मुहुर्यदतिदूरविवर्त्यपि सूच्यते ॥ ९ ॥
मिलदसंख्यशिवाकृतफेत्कृतैर्यदसुकम्पकृदूद्रितमूर्द्धजम् ।
अधिकवृकघनार्तिदघूत्कृतैः स्खलितकातरजन्तुगतागति ॥ १० ॥
भृतदिगन्तरदुःश्रवहुंकृतैर्विकृतवेषवपुर्मुखनर्तनैः ।
प्रचुरराक्षसभूतपिशाचकैर्भयकुलैरिव दुर्गपथं नृणाम् ॥ ११ ॥
विपुलमांसवसामदिरोन्मदं विततमुत्कलकेशमवस्त्रभृत् ।
भ्रमति यत्र सताण्डवडाकिनीकुलमकालमृतेरिव सादरम् ॥ १२ ॥
निशि च यत्र निशाचरनिर्मितामतिभयंकरकेलिविलोकनम् ।
छलयति स्म विधैर्यघनं जनं यमगृहातिथितां नयते च ताम् ॥ १३ ॥
किमिह भूरिवचोभिरुदीरितैस्तदपरं भुवि कालनिकेतनम् ।
निजगृहं स्थिरधैर्यवतां पुनः पितृवनं स ददर्श नृपस्ततः ॥ १४ ॥
(षड्भिः कुलकम्)

अथ स तत्र विवेश विशांपतिः प्रथितधैर्यधुरीणजनाग्रणीः ।
इदमभाष्यमभाषि च केनचिन्मनुजजातिनिसर्गभवद्रुषा ॥ १५ ॥
विततदारुण····कृतकर्मणा हृतवपुर्ध्रुवमागतवानसि ।
इह हि याति नृपोऽपि पतङ्गतां निशि निशाचरकोपहुताशने ॥ १६ ॥
पितृवने हतधीस्त्वमिहागतस्तदधिपस्य ममाप्यकृतार्चनः ।
क्षयमुपेहि तदद्य मया हतस्ततरुषा नकुलेन यथा फणी ॥ १७ ॥
सरसभक्ष्यमिव स्वयमागमश्चिरबुभुक्षुतरस्य ममाग्रतः ।
त्रिभुवनेऽपि न सोऽस्ति तवाद्य यो भवति रक्षणकर्मविचक्षणः ॥ १८ ॥
निजबलं मयि दर्शय माधुना मम पुरो मनुजाः किल कीटकाः ।
असुरनिग्रहमन्त्रचणोऽसि चेत्स्मर तमेव वशीकृतदैवतम् ॥ १९ ॥

असिरयं चतुरङ्गरणे रिपुक्षितिपकण्ठविलुण्ठनलम्पटः ।
इह हि स त्रपते जनमात्रके खलु खलेऽधमवाचि नियोजितः ॥ २० ॥
इति वदन्नृपतिः स नमस्कृतेः स्मरणतो व्यधिताचलनिश्चलम् ।
तमसुरं भयवातसमाहतं हृदयपल्लवमस्य तु कम्पितम् ॥ २१ ॥
अहमहंयुरिहाभवमाभवं जगति वीरकथा खलु मे वृथा ।
यदमुनैव कृतो विमदज्वरः सहजधैर्यवशंवदचेतसा ॥ २२ ॥
अहमतीव मदान्धविलोचनं पशुरिवाविदितस्वपरान्तरः ।
अधिगुणेऽत्र जने महतागसा यदपतं विपदीत्थमनर्थकृत् ॥ २३ ॥
करुणयैव न मे हृतवानसून्प्रकटदुष्टगिरोऽपि महाशयः ।
यदि कथंचन मोक्ष्यति मामयं तदुपकारितयास्तु मम प्रभुः ॥ २४ ॥
इति निधाय निजे हृदि निश्चयं निभृतनेत्रयुगं नृपमैक्षत ।
विदितदैन्ययशः कृपयामुना स मुमुचेऽथ तथैव विधानतः ॥ २५ ॥
तदनु वैद्युतपुञ्जमिव स्थिरं मणिसुवर्णविभूषणभूषितम् ।
सपदि दिव्यवपुर्दधदेत्य तं प्रणयतः प्रणनाम स भूपतिम् ॥ २६ ॥
स्फुरितभक्तिभरादिव नम्रतां दधदधीशमसावसुरोऽवदत् ।
जय विभो शरणं श्रितवानहं बत भवन्तमनन्तयशःश्रियम् ॥ २७ ॥
प्रभुरयं प्रभविष्णुरपि क्षमां सततमेव बिभर्ति यथा क्षमाम् ।
इति गुणद्वितयी तव गीयते सुरपतेः पुरतोऽप्सरसां गणैः ॥ २८ ॥
यदपराद्धमिहापि मयाधमाधमधियाधिकदुःसहतेजसि ।
अहितहेतुरितीव तदज्ञता मम दुनोति मनो नितरामियम् ॥ २९ ॥
अनुचितं यदवोचि वचो मया तदधुना क्षमणीयमिन त्वया ।
निजकभृत्यमितः परिभाव्य मां नतजने प्रभवः खलु वत्सलाः ॥ ३० ॥
मम तवोपरि रागतरङ्गिणी गुरुतरङ्गभरैरिव नृत्यति ।
नवरवाविव चक्रपतत्रिणः प्रियतमोत्तमसंगमकारिणि ॥ ३१ ॥
त्वदपरोऽस्ति न मोक्षकृते मम क्वचन जैनमतादिव देहिनः ।
भवदनन्तगुणौघवशंवदं तदुररीकुरु मां निजसेवकम् ॥ ३२ ॥

भवतु दिव्यविचित्रमणिप्रभा प्रबलपल्लवलास्यवती मम ।
विमलमौक्तिकहारलता तव प्रथमदर्शनयोग्यमुपायनम् ॥ ३३ ॥
इयमुदात्तसुताय मृगीदृशां भवति कण्ठतले विनिवेशिता ।
इति निशम्य स तां द्रुतमाददे प्रणयिनां हि समाधिविधिस्तथा ॥ ३४ ॥
प्रकटयत्युदितं परमोचितां तव कृतज्ञकृतश्रुतिसंमदाम् ।
विमलजात्यमणेरिव लक्षणं निजकमाकरजन्म शुभावहम् ॥ ३५ ॥
इदमुदीर्य निवर्त्य च तत्र तं श्रुतविलापमभिप्रचचाल सः ।
निजभुजैकसहायतया परं विदधतेऽधिकृतार्थमिहोर्जिताः ॥ ३६ ॥
विकचचम्पकचारुवपुःप्रभः प्रवरराजजनोचितलक्षणः ।
भुजजिनेन्द्रकरीन्द्रजकारय(?)र्विधृतनिर्दययोगिपतिव्रतः ॥ ३७ ॥
अशुभकारणकर्मणि कर्मठः शठतया प्रिययेव समाश्रितः ।
इह परत्र विरुद्धकराग्रणीर्निखिलदोषदवज्वलनानिलः ॥ ३८ ॥
स्वगुरुदर्शितमन्त्रविधायिनः पृथुलभूतलवर्तितमण्डलः ।
डमरुकस्य डमड्डमडम्बरारवभरेण भृताखिलदिङ्मुखः ॥ ३९ ॥
प्रबलभूतबलिं बलवत्तरः सकलदिक्षु समं जलधारया ।
प्रथमतः पृथुशान्तिविधित्सया व्यधित यः स्फुटकल्पविकल्पवित् ॥ ४० ॥
अकृत वाञ्छितसिद्ध्यधिदेवतां बहललोहितचन्दनचर्चिताम् ।
अरुणपुष्पचयै रचितार्चनां विहितयोग्यसमग्रबलिं च यः ॥ ४१ ॥
इह मया प्रतिकूललवोऽपि ते मुनिजनेन न कोऽपि करिष्यते ।
किमुत चिन्तितसिद्धिविधित्सया सुवदने भवती(?) समुपाहृता ॥ ४२ ॥
किमिह रोदिषि शोकवशंवदा सुतनु विश्वसिहि त्यज संभ्रमम् ।
नृपसुतेऽभ्युदयोऽपि करिष्यते तव मया विविधाद्भुतभूतिभूः ॥ ४३ ॥
इति गिरास्तभया लघुतां व्यधाद्विगतरोदनताररवां च यः ।
त्रिभुवनाखिलमीलितमायया विहितसृष्टिरिवानृतजन्मभूः ॥ ४४ ॥
उपकृपाणकृतच्छुरिकाकरं मधुरवाक्यसुधोक्षितकन्यकम् ।
अधिकृतार्थविधौ विहितोद्यमं नृपतिरैक्षत तं पुरतस्ततः ॥ ४५ ॥
(अष्टभिः कुलकम्)

अजपदिष्टनिबन्धनमुद्रया प्रकृतमन्त्रमथाहुतिमक्षिपत् ।
विहितहोममतिज्वलितानले स्वमिव दुर्गतिशास्व(श्व)तपावके ॥ ४६ ॥
तदभिपश्यति[1]………धराधिपे बहुलतान्तरितेऽथ स कन्यकाम् ।
समवदद्[2]द्वरया(?)दकदेवताबलिकृते त्वमिहाद्य विनाश्यसे ॥ ४७ ॥
इयदितस्तव जीवितमात्मनः कमपि रक्षणदक्षमिह स्मर ।
तदनु **विक्रमसिंह**महीपतिः शरणमेव ममेति जगाद सा ॥ ४८ ॥
क्षुरिकया न हि यावदपत्रपः प्रहरतीह स तावदपात्यत ।
क्षितिभुजा भुजतो द्रुतमस्य सा द्रुमलतादलवद्धन(?)वायुना ॥ ४९ ॥
समुपतस्थुषि यो[3]……पतौ युधे गतकरेऽथ कृपाणकरे रुषा ।
निजकरेण सितासिमकम्पयच्चरणताडनतश्च धरां नृपः ॥ ५० ॥
भुवि ववल्ग स वल्गुबलो ददावसिनिपातशतान्यभिभूपतिम् ।
अभिभवन्ति न तानि किमप्यमुं तिमिरसंततयस्तरणिं यथा ॥ ५१ ॥
भुवि कृतैर्गुरुभिः पददर्दरैर्नमदशेषफणीन्द्रफणोन्नती(ः) ।
वतमजीविव(?)रोषकषायतो रणमुखेऽभवतां नृपयोगिनौ ॥ ५२ ॥
प्रहितयोनिधनाय कृपाणयोरपि कृपाजनि तत्र[4]……योर्ध्रुवम् ।
परमया सुकुमारतयान्यथा कथमिमां वहता गलताश्रयोः(?) ॥ ५३ ॥
अथ मिथोऽसिलतापरिचुम्बितौ क्वचन………निर्गतलोहितौ ।
वधधिया भ्रमणेन विरेजतुर्ज्वलदलातकचक्रयुगोपमौ ॥ ५४ ॥
कपटकोटिपटुः स विशांपतेः करतलादसिपत्रमपातयत् ।
प्रहतवैरिवपुःक्षतजारुणं मरुदिवाशु तरोः श्लथपल्लवम् ॥ ५५ ॥
करगृहीतकृपाणलतं पुनः समरदक्षतयाद्भुतया नृपम् ।
यमभिवोद्धृतदण्डकरं रिपुस्तमवलोक्य मुमोच स धीरताम् ॥ ५६ ॥
द्विषदसिं विनिहत्य निजासिना क्षितिधवोऽपि सहेलमपीपतत् ।
इह भवन्ति जयर्द्धिकृते कृतप्रतिकृताय निरङ्कुशतेजसः ॥ ५७ ॥

---

१. 'तत्र' इति स्यात्. २. संपादकार्थकः पादकशब्दो भवेत्. ३. 'योगिपतौ' इति स्यात्. ४. 'त्र तयो' इति स्यात्.

अपहृतासि पराभवकोपितस्तदनु योगिपतिः कृतसाहसः।
चिरमयुध्यत मल्लयुधा क्रुधा नृपतिना सह दुःसहतेजसा ॥ ५८ ॥
विविधबन्धनिबद्धवपुः कृतः स्व इव तेन स योगगतोऽचलः।
नृपतिरप्यरिसूत्रितबन्धनं(?)मधुतवांस्तिमिरं द्युतिमानिव ॥ ५९ ॥
भुजगपाशदृढेन महीभुजा निजे·······द्वितयेन पराक्रमी।
रिपुरबध्यत बन्धनपीडया मृतिपथस्थ इवाथ मुमूर्छ सः ॥ ६० ॥
तमवलोक्य तथा विवशं विशांपतिरुदीर्णकृपामृतवीचिभिः।
समभिषिच्य मुमोच पुनर्नवीकृतमिवेति हि राजकुलोचितम् ॥ ६१ ॥
सिचयपल्लववीजनवायुना विगतमूर्छमुवाच नृपोऽथ तम्।
कुरु करेऽसिलतां मम पूरय क्षम रणे रणकेलिकुतूहलम् ॥ ६२ ॥
प्रतिजगाद स किं मम सांप्रतं रणचणेन रणेन सह त्वया।
सपदि दैन्यदशां गमितोऽस्मि यत्तव करैस्तरणेरिव चन्द्रमाः ॥ ६३ ॥
क्षपयति स्म स तस्य विलोलताममृतपूरसहोदरया गिरा।
स्वकुलदेवतया कथितं स्मरन्नथ तथा प्रणनाम स भूपतिम् ॥ ६४ ॥
त्वयि नरेन्द्र हठादपि भूभुजां प्रणतिरायति सुन्दर संपदे।
किमु रसायनपायनमङ्गिनामनभिलाषवतामपि नो मुदे ॥ ६५ ॥
भवति कापि नरेन्द्रमहोचिती ध्रुवमनन्यसमाश्रयसंभवा।
सुरतराविव वल्गितसौरभा स्फुरति नेतरभूरुहमञ्जरी ॥ ६६ ॥

देवस्त्रीवधपापपङ्कपतनव्यावर्तनेनामुना
त्वं मेऽभूः परिणामसुन्दरतया तस्यां दयायां गुरुः।
यन्माहात्म्यपुरस्कृतं खलु जनं स्वर्भूर्भुवः संपदः
सोत्कण्ठं कुचमण्डलेषु रमयन्त्यासन्नसिद्धिश्रियम् ॥ ६७ ॥

युष्मत्प्रसादान्नृप मानसे मे हंसीयतां सा सुगतिं दधाना।
वदन्निदं कन्दलयांबभूव प्रमोदकन्दं हृदये स तस्य ॥ ६८ ॥

(पञ्चभिः कुलकम्)

---

१. 'स धु–' इति स्यात्. २. 'भुज' इति भवेत्. ३. अनुदात्तेत्त्वप्रयुक्तात्मनेपदस्यानित्यत्वादत्र परस्मैपदप्रयोगे 'सहस्व' इत्यर्थो भवेत्. ४. 'सन्नसि–' इति स्यात्.

शौर्याकृष्टा तदनु विजयश्रीकटाक्षैर्वलक्षै-
रानर्चैनं कुसुमसुभगैः सानुरागा नरेन्द्रम् ।
देवश्रेणीकृतजयरवा पुष्पवृष्ट्या च हृष्टा
पूजापात्रं भवति हि मुहुः सद्गुणोत्कर्षवत्ता ॥ ९९ ॥

इति श्वेताम्बरश्रीमदभयदेवाचार्यविरचिते जयन्तविजयनाम्नि महाकाव्ये
श्रीशब्दाङ्के सुरयोगीन्द्रविजयो नाम चतुर्थः सर्गः ।

---

पञ्चमः सर्गः ।

संरक्षणाय रिपुतोऽहमभूवमस्याः
संग्रामकेलिभिरियं स्मरतापतो मे ।
स्वैर्दर्शनामृतरसैस्तु ममोपकार-
कन्येति तामथ मुहुर्नृपतिर्ददर्श ॥ १ ॥

अस्याः सितोत्पलदलं नयनद्वयस्य
कान्तेः सुवर्णममलं वदनस्य चन्द्रः ।
वाचः सुधा रतिरनुत्तररूपलक्ष्म्याः
सौभाग्यभङ्गिमनिशं स्पृहयांबभूव ॥ २ ॥

किं वागुरेयमपरा युवहृन्मृगाणां
निःस्पन्दतां दधति येन विलोकितापि ।
एकं स्मरस्य च जगत्त्रयजैत्रमस्त्रं
स्त्रैणोचिताद्भुतगुणोल्बणभूषणश्रीः ॥ ३ ॥

केयं क्व वाजनि कुले किमितापदीदं(?)[1]
संचिन्त्य तामभिललाप मुहुः स पश्यन् ।
दिष्ट्यासि जीवितवती सुभगे स्मरारिं
स्मेरस्मरः परिभवत्यपि दृग्बलात्ते ॥ ४ ॥

व्यालोकनेन सहसापि घनश्रियोऽस्य
हर्षप्रकर्षपरिनृत्तमनोमयूरा ।

---

१. 'लापदीयं' इति स्यात्.

अम्भःकणैरिव सुधामधुरैर्वचोभिः
सा प्राप निर्वृतिभरं क्षितिभृत्तटीव ॥ ५ ॥

अत्रान्तरे रुचिररत्नविमानमैक्षि
क्षोणीभृताद्युतितिरस्कृतभानुबिम्बम् ।
तस्मादुपेत्य सहसा सुरपुंगवेन
पूर्वोदितेन समनम्यत मानवेन्द्रः ॥ ६ ॥

प्रासादमुन्मुखमयूखशिखाढ्यरत्नै-
र्दीपालिकोत्सवमिवादधतं निशायाम् ।
सिंहासनं च नवभङ्गिभराभिराम-
मारामम‌द्भुततमं रचयांचकार ॥ ७ ॥

तद्भक्तिगौरववशाद्विहितासनस्य
तत्र क्षणं क्षितिपतेः पुरतः सदैव ।
प्रावर्तयद्रुचिरविभ्रमहावभाव-
लीलाविलाससरसं स्वपुरंध्रिलास्यम् ॥ ८ ॥

किं सानुरागहृदया मयि कन्यकेय-
मापद्गता किमिति मां शरणं प्रपेदे ।
योगीश्वरश्च किल कोऽयमिति क्षितीन्दु-
र्विस्मेरविस्मयरसप्रसरः स दध्यौ ॥ ९ ॥

देवोऽवदत्तदनु देव निवेद्यमानं
जिज्ञासितुं निजमिदं शृणु रत्नपुर्याम् ।
जज्ञे जितारिनृपतेर्दुहितेन्दुमत्यां
श्रीः श्रीमतीयमनुजा तव पट्टराज्ञ्याः ॥ १० ॥

साश्चर्यसौर्यसुभगत्वकलाप्रभुत्व-
दानादिभिस्तव गुणैरियमत्युदारैः ।
संख्यातिगैः श्रुतिपथातिथिभिर्बभूव
श्रीः श्रीपताविव नृप त्वयि सानुरागा ॥ ११ ॥

युष्मद्वियोगविधुरा मधुराङ्गलक्ष्मीः
सङ्गाशया धृतवती नृप जीवितव्यम् ।
त्वन्नाममन्त्रमनिशं जपति स्म कामं
रूपं निरूपितवती च तदैव चित्रे ॥ १२ ॥
कुप्यत्कृतान्तदशनान्तरवर्तिनीव
सस्मार देव तव नाम तदापदीयम् ।
गीतक्षुतस्खलनजागरणे भये च
संस्मर्यते प्रियजनस्य हि नाम लोके ॥ १३ ॥
लोकंपृणोल्बणगुणा नृपराजलक्ष्मी-
र्मूर्तेव सर्वविषयप्रभविष्णुसौख्या ।
सर्वाङ्गसुन्दरतया सुभगंभविष्णुः
प्राणप्रिया तव भविष्यति कन्यकेयम् ॥ १४ ॥
वृत्तान्तमस्य शृणु योगिपतेरिदानीं
रत्नावतीत्यभिधयास्ति पुरी प्रसिद्धा ।
तत्रोग्रसेनधरणीपतिरुग्रसेन-
स्तस्याभवत्प्रियतमा मणिमञ्जरीति ॥ १५ ॥
पृथ्वीधरं पृथुनरेन्द्रनवावतारं
गङ्गाधरं च भुवि केतुमिवोल्लसन्तम् ।
एतावसूत तनयौ क्रमतः सती सा
वेलाम्बुधेरिव सुधारसकालकूटे ॥ १६ ॥
भ्रात्रोरनुक्रममहर्निशमुत्तरङ्ग-
प्रेमोग्रमत्सरभरप्रभवप्रवृत्त्योः ।
जज्ञे तयोः कुशलता द्विजपुंगवानां
हस्ताङ्गुलीष्विव कलासु तदाखिलासु ॥ १७ ॥
तत्रादिमः क्षितिप मन्त्रिपुरी जनाना-
मुद्यत्सुदां[1] समुदयैः सहवर्धमानः ।

१. 'न्मुदां' इति स्यात्.

संक्षोभणं त्रिभुवनसितलोचनानां
स्मेरस्मरं तदनु यौवनमाससाद ॥ १८ ॥
लोकं दहन्मुखविषोल्बणनिर्यदग्नि-
ज्वालावलीभिरिव दुर्वचनैस्तदन्यः ।
उत्त्रासयन्कुचरितैः कुटिलैर्गतैर्वा
दुग्धं फणी च तरुणस्तरुणत्वमाप(?) ॥ १९ ॥
आदेशतः पितुरथ क्षितिपालकन्या
रूपश्रिया जितरतीः परिणिन्यतुस्तौ ।
पृथ्वीधरे तदनु सर्वजनानुरागा-
द्राजा न्यधत्त जयशालिनि यौवराज्यम् ॥ २० ॥
क्षीणोऽन्यदा क्षयरुजा क्षितिप क्षतार्तिः
पृथ्वीधरं धरणिनाथमथो विधाय ।
योगीव योगपरभागलयोपयोगे
चेतः स्थिरं सपदि निर्वृतिमाससाद ॥ २१ ॥
अन्तःपुरे पुरजनेऽखिलराजलोके
शोकाकुले कलयति स्म सकालधर्मा ।
किं कोऽपि दण्डधरदण्डनिपातचण्ड-
दण्डस्य गोचरमुपैति न जीवलोके ॥ २२ ॥
गङ्गाधरस्य निजबन्धुकृतैः प्रसादै-
रप्युग्रमत्सरभरः स तथैव तस्थौ ।
किं मुग्ध[1]......पटलप्लुतविग्रहोऽपि
काकः कदापि च न मुञ्चति कालिमानम् ॥ २३ ॥
तेनालघोर्लघुधियाभिमराः प्रयुक्ताः
स्नेहामृताब्धिमनसोऽपि वधाय बन्धोः ।
तेऽप्यन्धकारसचिवा ययुरीप्सिताय
प्रायः कुकर्मविधयो हि तमःसहायाः ॥ २४ ॥

---

1. 'दुग्ध' इति स्यात्.

तत्र प्रविश्य च कथंचन ते निगूढाः
पृथ्वीधरे रहसि न प्रहरन्ति यावत् ।
तावन्नृपेण रणदक्षतयास्तशस्त्राः
सर्वेऽक्रियन्त महतां न मुधा हि तेजः ॥ २५ ॥

बद्धाः पुरा नरकपात[1].......केन
स्वाम्याज्ञया तदनु संनिहिताङ्गरक्षैः ।
पृष्ठाः कशाभिरभिताड्यभियाभ्यधुस्ते
दुष्कर्मकारितमिदं भवतोऽनुजेन ॥ २६ ॥

किं मारणेन निजदुष्कृतमारिताना-
मेषां यतो मृतकमारणकर्म निन्द्यम् ।
प्रोद्भूतया करुणया प्रिययेति सम्य-
ग्विज्ञप्यमान.......मुचन्नरेन्द्रः ॥ २७ ॥

ज्ञात्वाप्यपास्यमपराधविधानजन्य-
मालिन्यकश्मलतमं तमपायभूतम् ।
स्वच्छाशयः स युवराजपदे चकार
क्व स्नेहमोहितधियां स्वहितप्रवृत्तिः ॥ २८ ॥

राज्याभिलाषविवशः स नरेश्वरस्य
स्वान्ते विवेश कृतकृत्रिमभूरि भक्त्या ।
मायां विना किमपि चेष्टितमद्भुतं त-
न्मुह्यन्ति येन सुतरां सुधियां धियोऽपि ॥ २९ ॥

उन्मीलता कपटनाटकपाटवेन
गूढेन गाढमखिलां नृप पर्षदं च ।
अन्यानपेक्ष्य बहुमानगुरुप्रसादै-
र्लोकंपृणैश्च स गुणैः स्ववशीचकार ॥ ३० ॥

---

१. 'नरकपातकपातकेन' इति पाठे 'नरकपातजनकपातकेन शपथं कारिताः' इति व्याख्या भवेत्.

राज्ञोऽङ्गरक्षक इवातिसमीपवर्ति
 पश्चात्पुरस्तवविधौ धृतबन्दिमुद्रः ।
राज्ये प्रमाणमयमेव ततो व्यधायि
 स्वात्मेव तेन ददृशे च निगूढमायः ॥ ३१ ॥

तज्ज्येष्ठबान्धववधार्थमिदं चरित्र-
 मस्येति कश्चन न तत्र विदांचकार ।
ब्रह्मापि लक्षयितुमक्षम एव मायां
 मायाविनामतिशयेन हि सुप्रयुक्तात् ॥ ३२ ॥

निद्रादरिद्रनयनः क्षणदावसाने
 संस्तम्भितोद्धृतकृपाणकरं निरीक्ष्य ।
गङ्गाधरं स्फुरति दैन्यमथान्यदा तं
 भ्रातः किमेतदिति भूमिपतिर्जगाद ॥ ३३ ॥

चञ्चेव कांचन न यावदुवाच वाचं
 तावत्सखेव मनुजं स जगाद साश्रुः ।
आः पाप पातकमिदं पतितं त्वयीत्थं
 विश्वासघातकतया विदधे यदुग्रम् ॥ ३४ ॥

स्वस्वामिनः श्रुतगिरो द्रुतमङ्गरक्षा-
 स्तत्रापयुर्बहुविधा युधपाणयश्च ।
ते वारिता नृपतिना नृपवंश यस्य
 दण्डो विदेशगमनं हि महागसोऽपि ॥ ३५ ॥

जातेऽथ कर्णकुहरप्रणयिन्यमुष्मि-
 न्गङ्गाधरस्य चरिते त्वरितं स दुःखः ।
तत्रैत्य पौरनिकरः परुषैर्वचोभि-
 स्तस्यावधूलमिव····प्रथयांबभूव ॥ ३६ ॥

दोषागमेऽधिकरुचिः खलु राजपुत्र
 कार्यो मयेव भवता बहुतेजसायम् ।

दृष्टेर्न गोचरमुपैति यथातथेति
　प्राप्तोदयस्तव रविर्नृप शंसतीव ॥ ३७ ॥
आकर्ण्य तूर्णमिति मङ्गलपाठकस्य
　प्रस्तावसुन्दरतया स तथा चिकीर्षुः ।
तत्कालमुच्छलदनुच्छकृपापरीत-
　स्तन्मोचनो(?)पयिकचिन्तनतत्परोऽभूत् ॥ ३८ ॥
पावित्र्यभाजि पुरुषेऽथ कृतावतारा
　देवी समीहितकृतेऽस्य कृतावनाङ्किः ।
कृष्णागुरुप्रवरधूपसुगन्धपुष्पैः
　पृष्टावदत्तव कुले नृपदेवताहम् ॥ ३९ ॥
माहाकुलीनचरितान्यवगण्यपुण्य-
　पण्यापणानिव कुकर्म विधाय शङ्कः ।
कुर्वन्प्रहारमसिना त्वयि वीक्ष्य रोषा-
　दस्तम्भि गाढमपराधवशान्मयायम् ॥ ४० ॥
निस्तम्भदेहमथ देवतया विधाय
　क्ष्माभृद्विदेशगमनाय तमादिदेश ।
तेजः श्रियाधिकतमस्तमसेव तेन
　मुक्तः स्फुरत्कुवलयश्च रराज राजा ॥ ४१ ॥
देवी पुनर्विनयिनं तमुवाच पुत्र
　प्रीत्या प्रमोदभरनिर्भरचित्तवृत्तिः ।
सायं दिवा मणिरुचामिव चक्रवालं
　भाग्यं दिनानि कतिचित्तव भावि मन्दम् ॥ ४२ ॥
गङ्गाधराद्यदमुतस्तव राज्यलक्ष्म्यां
　भ्रंशो भविष्यति तथा भवितव्यतायाः ।
तन्मा विषीद पुनराप्स्यसि तां स्वजेत्रि-
　क्ष्मापाक्ष्मपेश समयेऽभ्युदयो हि भानाः(?) ॥ ४३ ॥

धर्मेण सद्गतिफलेन जिनोदितेन
स्वर्गापवर्गपुरगोपुरसोदरेण ।
त्वन्मौलिरत्नमुकुटस्फुटपौनरुक्त्यं
नूनं भविष्यति भविष्यदमुद्रभद्रम् ॥ ४४ ॥

आकल्पकोटि विजयस्व महीमहेन्द्र-
राज्यश्रियेति जननीव तदाशिषं सा ।
दत्त्वास्य पूजननमस्कृतिभूरिभक्त्या
हृष्टा ययौ निजविमानममानशोभम् ॥ ४५ ॥

**गङ्गाधरः** क्वचन तत्र चिरेण राज्यं
लेभे कथंचन पुनः सगुणोज्झितोऽपि ।
उद्दामसंपदुदये खलु देहभाजां
पुण्यं प्रमाणमुदितं न गुणो········वा ॥ ४६ ॥

आबालकालकलिताधिकवैरबन्धः
स्वभ्रातरं प्रतिचचाल स भूमिपालः ।
राज्यं जिघृक्षुरपनिद्रपदाम्बुलोपा(?)
यूथं यथा द्विपपतिः प्रतियूथनाथम् ॥ ४७ ॥

दुर्भेद्यशालवलयेन परैरगम्यां
शीलप्रभावविभवे न सतीमिवास्य ।
आवेष्टयन्निजबलैः स पुरी बलीया-
न्मूर्त्तो रवेरिव महापरिवेषदोषः ॥ ४८ ॥

विद्याधरा इव ततो विषमास्त्रदक्षा
विद्याधरीपरिचयं मुमुचुर्न केचित् ।
वीराः परे तु नितरामवमन्य तस्थुः
शालस्य तस्य कपि·········शीर्षकाणि ॥ ४९ ॥

सा दानवैः सुरपुरीव ····रैः सुखेन
गम्या न जातु गुरुमन्त्रिमतिप्रकर्षा ।

स्वस्वामिकार्यरसिकास्तदपि द्विषन्त-
　स्तद्वप्रभञ्जनकृते समुपाक्रमन्तः ॥ ९० ॥
लुण्टाककोटिपटुलुण्ठितबाह्यलोकः
　कुद्दाकलोहलगुडावलिकुट्टितारिः ।
संख्यावतीतखनकैः खनितुं खनित्रैः
　प्रारम्भि शालवलयो दहनेन दग्धुम् ॥ ९१ ॥
उत्तप्ततैलदहनज्वलदिन्धनादि-
　प्राकारशृङ्गजनता क्षिपति स्म तत्र ।
उत्पातकाल इव घोर(?)मनःशिलाश्च
　स्वैरं ववर्ष रिपुदर्पमिवाशु भुक्तम् ॥ ९२ ॥
कुप्यत्कृतान्तभटनिष्ठुरमुष्टिपात-
　प्रायैरपायपरिवर्जितयन्त्रमुक्तैः ।
पाषाणगोलकशतैर्न्यपतन्विनेषु-(?)
　र्नेशुश्च केचन बहिः प्रियजीवितव्याः ॥ ९३ ॥
सेनाविपक्षनृपतेरुपशालमूलं
　कूलंकषेव कुलशैलतलं समेत्य ।
तद्भञ्जने विफलितौपयिकातिखिन्ना
　क्षिप्रं पलायत ततः पुरसैन्यशस्त्रैः ॥ ९४ ॥
कृत्वाथ भेदितसमस्तपरिच्छदन्तं
　राज्याच्युतं स विदधे गुरुमात्मबन्धुम् ।
भूयिष्ठभावविधिना सुखमेव चक्रा-
　त्सूत्रेण कुम्भमचिरादिव कुम्भकारः ॥ ९५ ॥
गङ्गाधरप्रभवभेदविधानबीज-
　संजातमत्सरतया विरराज पर्षत् ।
नाथं यथार्थमपि तं रिपुवद्ददर्श
　सर्वं विधौ हि विमुखे विमुखं जनस्य ॥ ९६ ॥

आदाय राज्यकमलामधमः स्वबन्धोः
सूत्रप्रकारमवमत्य महोपकारम् ।
गोत्रं निजे सुरतरङ्गवती सगोत्र-
**गङ्गाधरः** समजनि प्रथमः कलङ्कः ॥ ९७ ॥

एकाक्ययं भवतु दूरविदेशगामी
पूर्वं यथास्य वचनादहमित्यवेत्य ।
मुक्तोऽथ तेन स चचाल ततः पदाभ्यां
पौरैः पदातिरिव साश्रुभिरीक्ष्यमाणः ॥ ९८ ॥

शश्वन्मनोरथपथं स्फुरदात्मराज्यो-
पायस्तदा भ्रमदनःप्रमनाः क्षमायाम् ।
सेवां च न क्वचन कस्यचिदेष चक्रे
स्वातन्त्र्यराज्यमसमं स्ववशं हि तस्य ॥ ९९ ॥

योगीश्वरं क्वचन भूभृदघोरघण्टं
वीक्ष्याश्रयत्परिचयोपचयात्तु तस्य ।
सोऽभूद्दयालुहृदयोऽप्यतिरौद्रमुद्रः
क्षारं न किं लवणसागरतोऽम्बुमुष्टिम् ॥ ६० ॥

निःशूकमानसतया जितदन्दशूक-
स्तुल्यो ममेति मुदितात्स्वगुरो स दीक्षाम् ।
संप्राप पाणिमिव दुर्गतिकन्यकायाः
कन्याबलं विविधसिद्धफलं च मन्त्रम् ॥ ६१ ॥

तस्यानुभाववशतो द्रुतमन्तरिक्षे
भ्राम्यन्विलोक्य नृपसौधतलाथ बालाम् ।
एतामिवानयदयं निजमन्त्रसिद्ध्यै
प्रत्यक्षमेव तव देव पुरस्तु सर्वम् ॥ ६२ ॥

पृथ्वीपुरंदर·······मेव ताव-
दात्मीयवृत्तकथनं स्वयमुत्तमानाम् ।

किं तु त्वदीयमहनीयमहोपकार-
संसारवर्णधनिकैव करोति किंचित् ॥ ६३ ॥

शुभ्रांशुशुभ्रजिनहर्म्यविभानिभेन
कृत्योपहासमिव यत्रिदशेन्द्रपुर्याः ।
श्रीश्रीपुरेऽजनि नृपः किल तत्र शत्रु-
चित्रासलालसमना शशिनामधेयः ॥ ६४ ॥

तस्मिञ्शुभोदयदयादमदानमुख्यैः
सर्वत्र विश्रुतगुणैर्गुणिनां धुरीणः ।
श्रेष्ठी बभूव धनदो जिनधर्मकर्म-
निर्माणसंनिहितसिद्धिवधूविलासः ॥ ६५ ॥

प्राणेशलोचनचकोरसुधांशुलेखा
लावण्यधाम ललना ललितेति तस्य ।
सूनुस्तयोस्त्वमभवः फलिताम्रवृक्ष-
स्वप्नेन सूचितधनो धनदत्तनामा ॥ ६६ ॥

कान्तैर्गुणैः कृतपदस्य तदायमेव
दोष(?)सूवाजनि जगत्त्रितयप्रतीतः ।
कुक्षिंभरिर्यदसि शारदचन्द्रसान्द्र-
ज्योत्स्नासपत्नरुचिभिर्गुणिनां यशोभिः ॥ ६७ ॥

त्यक्त्वा पुराणपुरुषं नववासलाभ-
लोभादिवाश्रितमुखोऽजनि तत्र वेदैः ।
विष्णुर्द्विजः प्रणयिनी कमला च तस्य
सूनुस्तयोः समुदपद्यत देवशर्मा ॥ ६८ ॥

जन्मान्तरं तदनुयातवतोः स पित्रोः
पक्षीव तत्क्षणदभूदपपक्षभावः ।
बाल्येऽप्यनिष्टघटनाप्रभविष्णुदौस्थ्यः
कालानपेक्ष्य पतनः खलु कालदण्डः ॥ ६९ ॥

पाठीनवल्लभतमां द्विजराजविद्या-
निर्दम्भकेलिसदनं जलसङ्गमुक्तम् ।
बाल्येऽपि तस्य तदजायत धीरवत्त्वं
यन्मित्रमावहति कस्य न नाम चित्ते ॥ ७० ॥

दारिद्र्यविद्रुतमना न मनागपि स्वं
लेभे वदान्यजनतोऽपि गुणार्गलोऽपि ।
कृच्छ्रादवाप्तकशिपुस्तु निजान्तराय-
दुष्कर्मतोऽयमभवत्कृतरङ्कशङ्कः ॥ ७१ ॥

भिक्षां भ्रमन्न तु गृहं कणमात्रवृत्तिः
क्षुत्क्षामकुक्षिरनिशं मललुप्तकान्तिः ।
नव्यः शशीव जलदान्तरितप्रकाशः
श्रेष्ठयङ्गजेन ददृशेऽथ सता स तेन ॥ ७२ ॥

अत्यन्ताशुभकर्मसंचयवशान्निःश्रीकचूडामणिः
सद्योऽप्येष बभूव वैभववतां धुर्यो धनस्यैक्षणात् ।
किं नो फाल्गुनफल्गुवल्गनबलात्क्षीणोऽपि वृक्षः क्षणा-
ल्लक्ष्मीर्याति विलोलपल्लवलतालास्यप्रशंस्यां मधोः ॥ ७३ ॥

इति श्वेताम्बरश्रीमदभयदेवाचार्यविरचिते जयन्तविजयनाम्नि महाकाव्ये श्रीशब्दाङ्के योगीन्द्रस्वरूपनिरूपणो नाम पञ्चमः सर्गः ।

---

## षष्ठः सर्गः ।

अथोपयेमे स गिरीन्द्रपुत्रीरूपा विलेपच्छिदुरस्वरूपाः ।
महर्द्धिविप्रान्वयसंप्रसूताः कन्याः प्रभूताः स्मरशस्त्रभूताः ॥ १ ॥

रूपं मनोहारि वयो नवीनमसाधुसङ्गो धनमत्ततेति ।
मध्ये मनः सौधमनङ्गवह्नेर्घृताहुतिक्षेप इवास्य जज्ञे ॥ २ ॥

वश्यः स्वकान्तोऽपि स धावति स्म सापायसङ्गासु पराङ्गनासु ।
किं केतकीषु स्फुटकण्टकासु न याति जातीः परिहाय भृङ्गः ॥ ३ ॥

उदीर्णरागां स्मितनेत्रपत्रामम्भोजिनीं सायमिव द्विरेफः ।
अथैकदासौ रतिविह्वलाङ्गः पराङ्गनां प्राप च बन्धनं च ॥ ४ ॥
स नीयमानः स्फुटदङ्गयष्टिरारक्षवीरैर्दृढबन्धबद्धः ।
वध्या च नो वध्यविडम्बनाभिर्विडम्बितोऽदर्शि धनात्मजेन ॥ ५ ॥
निवर्त्य तान्भूमिपतेः प्रधानमुपायनं भूरि धनं विधाय ।
तदाज्ञयामोचि स तेन सद्योदानं विसर्वव्यसनापहारि ॥ ६ ॥
नीत्वात्मसौधे कृतमज्जनादि सर्वोपचारं सकलाङ्गसुस्थम् ।
स्वदुष्कृतोत्पन्नघनानुतापं वच्छायवक्रं तमुवाच मित्रम् ॥ ७ ॥
यदत्र जन्मन्यपि जन्मभाजां क्षेत्रं स्फुरत्तीव्रविडम्बनायाः ।
कराद्यभावव्यधबन्धबाधाविधौ च दुर्वारमिवारिचक्रम् ॥ ८ ॥
यन्निष्कलङ्कस्य कुलस्य कामं कलङ्कपङ्काय सनातनाय ।
स्फुरद्विषोर्म्मप्रतिमश्रुतीनां हेतुश्च धिक्कारपरम्पराणाम् ॥ ९ ॥
असंख्यदुःखैः खलु दुःखितानां यन्तारकाणां नरकेषु भूयः ।
वज्रानलोल्लासिशिखासमूहलोहाङ्गनालिङ्गनलम्भनाय ॥ १० ॥
वैधव्यदुःखं कुलबालिकानां दौर्भाग्यभङ्गीमनपत्यतां च ।
वियोगदावानलदाहदौस्थ्यं तनोति दौर्जन्यमिवादधद्यत् ॥ ११ ॥
प्रत्यूहसंदोहलताप्ररोहनवाम्बुवाहप्रतिहस्तमेनम् ।
तन्मित्र दूरादपराङ्गनाङ्गसंघर्षसङ्गं त्यज तीव्रपापम् ॥ १२ ॥
(पञ्चभिः कुलकम्)

शीलव्रतस्याचरणादवश्यं पुण्यावधेः सिद्धिरसादिवातः ।
कल्याणकोटिः कलयांचकार कराम्बुजे कस्य न लास्यलीलाम् ॥१३॥
मूलं जगद्व्यापि यशोद्रुमस्य समस्तसंपत्प्रतिभू सनाभिः ।
प्राभावभानूदयपूर्वशैलः शीलं सलीलं परिशीलितं हि ॥ १४ ॥
रूपं जितायुग्मजिरस्वरूपं सत्त्वं पराभूतसमस्तसत्त्वम् ।
संपद्यते देहभृतां यदत्र पुष्पोद्गमः शीलतरोः स नूनम् ॥ १५ ॥
आदेयतायाः पदमद्वितीयं विश्वासभूर्विश्वसनीयतायाः ।
शीलं समस्ताभिमतार्थसिद्धेः प्रियैकसंकेतनिकेतनं च ॥ १६ ॥

उदग्रसौभाग्यमसंख्यसौख्यं न व्यर्थता क्वापि मनोरथानाम् ।
एकातपत्रं च यदाधिपत्यं तच्छीललीलायितमङ्गभाजाम् ॥ १७ ॥
विवेककल्पद्रुममञ्जरीव स्वर्लोकमार्गे शिबिकेव दिव्या ।
पृथुप्रतोली च विमुक्तिपुर्याः प्रिया न कस्यामलशीललीला ॥ १८ ॥
इमं गृहीत्वा धनदत्तदत्तं हितोपदेशं जलवत्तृषार्तः ।
पराङ्गनासङ्गनिवृत्तिरूपं चक्रे व्रतं तेन तु सातिचारम् ॥ १९ ॥
सोऽहं परस्त्रीषु रिरंसयाथ मालिन्यभाजा किमपि व्रतेन ।
सामानिकः पुण्यजनाधिपस्य देवोऽभवं **कुण्डल**नामधेयः ॥ २० ॥
एवंविधेनाप्यनुशीलितेन शीलेन संपत्तिरजायतासौ ।
किं पङ्कसंपर्कजुषापि जात्यरत्नेन लभ्येत न भूरिलाभः ॥ २१ ॥
तदैहिकामुष्मिकदुःखशाखि कूलंकषां संनिभमाश्रयन्ते ।
विशुद्धिसौरभ्यभराभिरामं शीलं शुभोदर्कपराय सन्तः ॥ २२ ॥
रङ्कोपमस्यापि ममाविरासीद्दशाविलासः परिपूरिताशः ।
युष्मत्प्रसादादिति भूमिपाल सीमासि निष्कारणवल्लभानाम् ॥ २३ ॥
प्राप्तुं परं पारमपारपारावारस्य विश्वेश कदापि शक्यम् ।
न तु त्वदीयानुपमोपकारस्नेहप्रकारस्य मया कथंचित् ॥ २४ ॥
कुलक्रमायातजिनेन्द्रधर्मकर्मैककामो धनदः पिता ते ।
**श्रीसुस्थिता**ह्वस्य युगप्रधानगुरोरुपास्त्याशिवशर्म लेभे ॥ २५ ॥
प्रोल्लासिता देव निजेव कीर्तिर्जिनस्य भक्तिर्भवतोऽतिमात्रम् ।
महोत्सवै रञ्जितलोकलक्षैस्तच्छासनस्योन्नतिरप्यनल्पा ॥ २६ ॥
दानादिभिः पुण्यविशेषकृत्यैर्नृत्यद्यशोभिः सुरभीकृताङ्गम् ।
कटाक्षलक्षैर्नृपतेर्वलक्षैस्त्वां मोक्षलक्ष्मीर्मुहुरीक्षते स्म ॥ २७ ॥
नरेषु बद्धायुरिति त्वमिन्द्रलक्ष्मीमुपेक्ष्येव नृलोकपुण्यैः ।
राज्ञस्तनूजो हरिविक्रमस्याभूर्भूपतेर्**विक्रमसिंह**नामा ॥ २८ ॥
श्रुत्वेति पूर्वं निजजन्म पश्यञ्जातिस्मृते स्वं च तथा स्वमन्त्री ।
प्रीत्या नृपो देवमथालिलिङ्ग प्रवेशनाय स्वहृदीव सद्यः ॥ २९ ॥

देवः पुनः सप्रणयं प्रणम्य विज्ञो नृपं विज्ञपयांबभूव ।
कन्येयमाधातुमनाकुलत्वं पित्रोः पवित्रा भवतोपनेया ॥ ३० ॥
निशादिनी कुर्वदिव द्युरत्नसपत्नरत्नद्युतिभिर्विमानाम् ।
आरुह्य देवस्य गिरा नरेशः श्रीयोगिराजेन निषेव्यमाणः ॥ ३१ ॥
उपात्तकन्यार्धकटाक्षवीक्षा प्रसृत्वरानङ्गतरङ्गिताङ्गः ।
शृण्वन्स रामारमणीयगेयं पुरं जितारेस्त्वरितं जगाम ॥ ३२ ॥

(युग्मम्)

यक्षेन्द्रवाक्चैत्ररथैर्नरेन्द्रस्ततस्तदीयोपवनेऽवतीर्य ।
आमोद्यमानः सुमनःसमूहैः समं विशश्राम परिच्छदेन ॥ ३३ ॥
उद्यानपालः सहसोपलक्ष्यतां तां कन्यकां प्रीतिमतीं पतिं च ।
तत्रेयवांसं रभसाज्जितारेर्निवेद्य जज्ञे परमोत्सवाय ॥ ३४ ॥
उत्कण्ठयोच्छृङ्खलया तदानीं संप्रेर्यतः क्षोणिवधूविलासी ।
तत्राभिगन्तुं पवनः प्रवृत्त्यानुकूलया पीत इवाब्धिपारे ॥ ३५ ॥
ततः सुवर्णाभरणादिदानैर्दारिद्र्यविद्रावणजागरूकैः ।
उद्यानपालं स महीमहेन्द्रः कृतप्रसादं विससर्ज सद्यः ॥ ३६ ॥
कस्तूरिकाकुङ्कुमवारिपूरैः सिक्तेषु मार्गेषु विकर्णपुष्पैः ।
प्रीत्या सहासेव नितान्तनृत्यद्भुजेव वायुप्रचलैर्ध्वजाग्रैः ॥ ३७ ॥
उत्तालकौतूहलनिर्निमेषैः सुरेशवेशैर्युवभिः सयोषैः ।
तदा सलीलं परितश्चलद्भिर्जितारिपूः स्वर्गपुरीव रेजे ॥ ३८ ॥

(युग्मम्)

अथाचलच्चञ्चलवाजिराजिखुरक्षतक्षोणिरजःप्रशान्तिम् ।
कुर्वञ्जितारिः करिकुम्भमूलगलन्मदाम्भोभिरभिक्षितीशम् ॥ ३९ ॥
उपागतं स्वागतिकं स पौरं नरेश्वरं विक्रमभूमिपालः ।
चकार योग्यप्रतिपत्तिमात्रं निरन्तरस्मेरविवेकनेत्रम् ॥ ४० ॥
महेश्वरस्यैव नगाधिराजो राज्ञस्ततस्तस्य नृपो जितारिः ।
सिंहासन..................स्य स्वमेव संपत्त्युचितं चकार ॥ ४१ ॥

सहेलमागत्य कृतप्रणामामुदश्रुनेत्राम्बुरुहां स कन्याम् ।
उत्सङ्गमारोप्य शिरश्चुचुम्ब प्रमोदपीयूषपयोधिमग्नः ॥ ४२ ॥
संलापपीयूषविशेषवृष्टिं संक्षेपतः क्षोणिपतिर्विधाय ।
तौ कल्पिताकल्पविभूषणाङ्गौ पुरीप्रवेशे प्रगुणावभूताम् ॥ ४३ ॥
हिरण्यरत्नाभरणः करीन्द्रः श्रीविक्रमक्षोणिभृताधिरूढः ।
दध्रे सुरेन्द्राध्युषितस्य शोभामभङ्गुराजङ्गमरत्नसानोः ॥ ४४ ॥
उदारशृङ्गारतरङ्गिताङ्गीं विधाय कन्यां पुरतो जितारिः ।
ऐरावणस्पर्धिनि वारणेन्द्रे पूर्वाद्रिशृङ्गेऽर्क इवारुरोह ॥ ४५ ॥
अनुज्ञया विक्रमभूमिभर्तुः शिश्राय देवोऽपि तदा विमानम् ।
क्षोणीतला संभविभूरिसावैः कौतूहलं कन्दलयञ्जनानाम् ॥ ४६ ॥
अथ प्रथीयश्चतुरङ्गरङ्गच्चमूभरन्यञ्चितभोगिराजः ।
समं समस्तैरचलज्जितारिः पुरं प्रति प्रीतिसमुत्तरङ्गैः ॥ ४७ ॥
निश्वासनादैः परितः स्फुरद्भिर्वाचालयन्भूधरकन्दराणि ।
तूर्यत्रिकैः पल्लवयन्नमन्दमानन्दमापूरितरोदसीकैः ॥ ४८ ॥
विचित्रयानैर्नगरप्रधानैः सामन्तमित्रैरनुगम्यमानः ।
सुखासनेषु स्थितिमीयुषीभिरन्तःपुरीभिश्च सुसंवृताभिः ॥ ४९ ॥
स राजहंसोचितपुण्डरीकैः प्रफुल्लकासोज्ज्वलचामरैश्च ।
तत्त्वन्नकालेऽपि शरत्समृद्धिं पुरीं विवेश प्रसरत्प्रतापः ॥ ५० ॥

(चतुर्भिः कलापकम्)

कैलाशशैलप्रतिमल्लमुच्चैः प्रसादमासाद्य नरेश्वरौ तौ ।
स्फुरद्विभूतिप्रतिभासमानौ रत्नासने शिश्रियतुः सभायाम् ॥ ५१ ॥
तत्रोल्लसल्लास्यभरं तरङ्गि गीतध्वनिस्फूर्जिततूर्यनादः ।
तयोस्तदा वारविलासिनीभिर्वितेनिरे कौतुकमङ्गलानि ॥ ५२ ॥
अभ्यर्थितस्तत्र स संभ्रमेण जितारिणा विक्रमभूमिपालः ।
भ्रूसंज्ञया तस्य जगाद देवः कन्यापहारानयनादि सर्वम् ॥ ५३ ॥
उत्कर्णमाकर्ण्य वितीर्णतोषं स विक्रमं विक्रमसिंहवृत्तम् ।
चिरं चमत्कारमयीव सर्वा सभा समं भूपतिना बभूव ॥ ५४ ॥

आदेशतः पत्युरथाजगाम तत्राल्पमात्रेण परिच्छदेन ।
·········प्रमोदप्रसरेण सार्धं देवी द्रुतं प्रीतिमती प्रहृष्टा ॥ ५५ ॥
श्रीविक्रमः कुण्डलकान्तिलिप्तकपोलभित्तेरथ कुण्डलस्य ।
वृत्तं स्फुरत्प्रेमनिबन्धनं तत्पुरः सभायाः प्रकटीचकार ॥ ५६ ॥
यशःपताकामिव मीनकेतोरास्येन दास्यं दिशती सुधांशोः ।
पित्रोपनीतां परमोत्सवेन कन्यां नृपस्तामथ पर्यणैषीत् ॥ ५७ ॥
श्रियःपतिः कौस्तुभमुख्यरत्नैरिवार्णवः प्रीतिसमुत्तरङ्गः ।
जामातरं भूपमपूजयत्तं धराधवः सिन्धुरवाजिदानैः ॥ ५८ ॥
शचीकुचाभोगविलासयोग्यैश्चीनांशुकैर्मौक्तिकहारिहारैः ।
तैस्तैर्महार्घैं रुचिभिः पदार्थैः पुत्र्योर्मुदं मेदुरयांचकार ॥ ५९ ॥
आभ्यां समं मूर्तजयप्रतापश्रीभ्यामिवान्येद्युरसीमसैन्याम् ।
दूरेऽनुगम्य क्षितिभृज्जयन्त्यां श्रीविक्रमामुत्कलयांचकार ॥ ६० ॥
पुरीं जयन्तीं वरवैजयन्तीं श्रीविक्रमः क्षोणिपतिः क्रमेण ।
सुरेश्वरस्यापि विलोकनीयमहोत्सवां प्रीतमना विवेश ॥ ६१ ॥
उत्कण्ठितायाः स भृशं प्रियायाः सुताय कण्ठे सुतजन्महेतुम् ।
न्यधत्त तं कुण्डलदत्तहारं पुण्योदयं मूर्तमिवात्मवंशे ॥ ६२ ॥
मुखप्रशान्तप्रविशद्गजेन्द्रसिंहेन्दुसुस्वप्नविलोकनेन ।
संसूचिताशेषविशेषसौख्यसाम्राज्यलक्ष्मीललिताधिपत्यम् ॥ ६३ ॥
तस्य प्रभावेण बभार गर्भं दिनेऽथ तत्रैव नृपप्रिया सा ।
सद्योऽप्यभीष्टार्थफलप्रसादाः सर्वत्र दिव्या हि भवन्ति भावाः ॥ ६४ ॥
(युग्मम्)

गर्भानुभावप्रभवद्विशिष्टसौभाग्यसंभारतरङ्गिताङ्गी ।
उदेष्यदुष्णद्युतिमण्डलायाः प्राच्यास्तुलां सा बिभरांबभूव ॥ ६५ ॥
आपन्नसत्त्वामभिवीक्ष्य देवीं हर्षप्रकर्षः समभून्न कस्य ।
तद्गर्भवृद्धेः पिशुनौ स्तनौ तु बभूवतुः श्याममुखौ तदानीम् ॥ ६६ ॥
नह्यावयोरुद्धतिमेष जातः सहिष्यते हन्त विनीतवृत्तिः ।
इति स्फुरत्खेदभरादिवोच्चैस्तस्याः स्तनौ श्याममुखावभूताम् ॥ ६७ ॥

कस्यापि गर्भे समुपागतस्य पुण्यात्मनः शुद्धयशोविलासैः ।
संस्पृश्यमानेव च पाण्डिमानं कपोलपाली कलयांचकार ॥ ६८ ॥
अलक्षितोच्चैर्नयने क्षिपन्ती साक्षेपमुष्णद्युतिमण्डलेऽपि ।
समस्ततेजस्विशिरोऽवतंसमसौ तनूजं जनयिष्यतीति ॥ ६९ ॥
गाम्भीर्यवार्धेरधिगर्भमस्य समागतस्यानुपमानरागात् ।
देव्याः शरीरे त्रिवलीतरङ्गा गङ्गेव लावण्यनिभादुपागात् ॥ ७० ॥
वसुंधराभारधुरंधरस्य सुतस्य गर्भे समुपागतस्य ।
तदानुभावान्मणिकुट्टिमेऽपि चचाल सामं वरपादपातम् ॥ ७१ ॥
मातुः प्रमोदप्रसरैरनन्यैः पितुः प्रतापैर्विहितारितापैः ।
सामन्तमन्त्रीशमनोरथैश्च सार्धं सुखेनैष बभार वृद्धिम् ॥ ७२ ॥
गजेन्द्रमारूढवती प्रियेण धृतातपत्राचलचामरश्रीः ।
कादम्बिनी चात्र पुरि भ्रमन्ती दानाम्बुना कन्दलयामि वृष्टिम् ॥७३॥
इति प्रियाया बहुपुण्यगर्भमाहात्म्यजं दोहदमाकल····म् ।
अपूपुरत्पौरपरम्पराभिर्व्यावर्णगर्भाभ्युदयं महेन ॥ ७४ ॥
रेजे कृतैः पुंसवनादिकृत्यैः स गर्भसंप्रीणनभावगर्भे ।
प्रशस्यसस्याङ्कुरमध्यभागा धरेव धाराधरवारिचारैः ॥ ७५ ॥
तैस्तैर्नृपोऽस्याः सुतजन्मचित्तः सर्वात्मनोल्लासमगादवन्ध्यैः ।
रसालशाखीव च दक्षिणस्याः समीरणैः सूचितसद्वसन्तैः ॥ ७६ ॥
अतुल्यकल्याणकलापसंपत्कीर्तिप्रतापोन्नतिभिः परीतम् ।
असूत सा सूनुमनूनकान्ति साम्राज्यलक्ष्मीकुलधाम्नि लग्ने ॥ ७७ ॥
खच्छलाद्गीतगुणालिनीभिर्बद्धा बभूवामरपुष्पवृष्टिः ।
मुक्ता कुमारं प्रति पुण्यलक्ष्म्या कटाक्षविक्षेपपरम्परेव ॥ ७८ ॥
तस्येह माहात्म्यसुधापयोधेर्डिण्डीरपिण्डभ्रममादधानः ।
नैर्मल्यमुच्चैरथ यामिनीषु पुपोष पीयूषमयूखमाली ॥ ७९ ॥

(युग्मम्)

दिशः प्रसन्नाः शरदीव नद्यो वातास्तदामोदभृतो जनाश्च ।
बभूवुरभ्रे सुरदुन्दुभीनां पयोदनादप्रतिमा निनादाः ॥ ८० ॥

तत्र क्षणेऽभ्येत्य सुहृत्स देवः श्रीविक्रमं विक्रमिणं प्रणम्य ।
प्रमोदयामास कथाप्रबन्धैर्विशेषतोऽशेषमनीषिहृद्यैः ॥ ८१ ॥
नितम्बबिम्बस्तनभूरिभारान्नितान्तमन्दक्रमणक्रमाणाम् ।
प्रलम्बमुक्ताफलहारयष्ट्या स्खलद्गतानामतिवेगभावात् ॥ ८२ ॥
उच्छ्वासपूर्णस्य सरोरुहाणामासेदुषीणां सविधे नृपस्य ।
वक्त्रं ततोऽभ्यङ्गजजन्मवार्ता वाचां विलासोऽजनि सुन्दरीणाम् ॥८३॥
(युग्मम्)
दिष्ट्या नरेन्द्राधिप वर्धसे त्वं श्रीप्रीतिमत्याः सुतजन्मनाद्य ।
चन्द्रोदयेनेव सितद्वितीया तिथेर्जगत्प्रीतविलोकनेन ॥ ८४ ॥
पीत्वेति वाचं श्रुतिशुक्तिकाभ्यां सुधामिवासां विदधे प्रसादम् ।
स स्वर्णवस्त्रैर्मणिभूषणैश्च कन्दैरिवैश्वर्यमहाद्रुमस्य ॥ ८५ ॥
राज्ञस्तथान्यस्य सभाजनस्य तत्रोत्तरीयाणि मनोहराणि ।
निरन्तरस्वामिपदप्रसादश्रीशासनानीव तदा ददुस्ताः ॥ ८६ ॥
समादिदेशाथ नियोगिवर्गं सर्वत्र पुर्यां परमोत्सवाय ।
श्रियोऽनुरूपा सुतजन्मकाले न जायते कस्य महप्रवृत्तिः ॥ ८७ ॥
निरीक्षितुं नन्दनमुत्सुकोऽसौ कल्पद्रुमं जातमिवात्मगेहे ।
निवेद्यमानागमनः पुरोगैर्विशांपतिः सूतिगृहोन्मुखोऽभूत् ॥ ८८ ॥
द्वारेन्द्रनीलद्युतिमांसलाभिः समन्ततो वन्दनमालिकाभिः ।
रराज····दिव्यमहोत्सवश्रीः कपोलपत्राङ्कुरविभ्रमाभिः ॥ ८९ ॥
यूपैर्यध्दूर्वैर्मुशलैश्च भाति कौसुम्भरागारुणवस्त्रमध्यैः ।
सपद्मरागाङ्गदबाहुयुग्मैरिवोन्नतैर्मङ्गलदेवतानाम् ॥ ९० ॥
श्रीकुण्डलाख्येन सुरेण····यत्प्रेषिताभिर्निजसुन्दरीभिः ।
राजन्यकान्ताभिरपि प्रमोदात्प्रारब्धकर्णामृतवीचिगीतम् ॥ ९१ ॥
यस्मिन्कुमारस्तु पनेच्छुरभ्रगङ्गासितोल्लोचमिषादिवागात् ।
यच्चन्द्रकान्तामलभित्तिभागकस्तूरिकार्द्रस्तबकैर्धितश्रि ॥ ९२ ॥
मधुव्रतव्रातनिपीयमानसौरभ्यपुष्पप्रकरं यदुच्चैः ।
भृतान्तरिक्षैर्गुरुधूपधूमैर्घनभ्रमान्नर्तिमयूरवृन्दम् ॥ ९३ ॥

प्रेङ्खोलदुच्छृङ्खलकान्तिरत्नमालावचूलि·········वर्धितश्रि ।
यदन्तरङ्गीकृतदीप्तदीपज्योतिः कुमाराङ्गमरीचि चक्रे ॥ ९४ ॥
सर्वेन्द्रियाणामपि यत्समन्तादानन्दसाम्राज्यमिवादधानम् ।
स सूतिकावेश्म तदा विवेश विशांपतिः कौतुकनिर्निमेषः ॥ ९५ ॥
(सप्तभिः कुलकम्)
ससंभ्रमाथ प्रतिपत्तिपूर्वमुर्वीपतेरासनमाश्रितस्य ।
ततोऽनुजन्मानमिव स्मरस्य सादर्शयन्नन्दनमिन्दुकान्तम् ॥ ९६ ॥
तमङ्कमारोप्य निरूप्य सम्यक्सल्लक्षणैर्लक्षितकाययष्टिम् ।
अमन्यत क्षोणिपतिर्धरित्रीभारं समुत्तीर्णमिव स्वदोष्णः ॥ ९७ ॥
कुम्भस्तनीभिर्नवहेमकुम्भैः पण्याङ्गनाभिः स्नपितः सरागम् ।
स कल्पिताकल्पविभूषणश्रीः सद्यः सभामण्डपमाससाद ॥ ९८ ॥

कुरङ्गैरुत्तुङ्गै रणदनणुघण्टैः करटिभिः
सुवर्णैः सद्वर्णैर्वसननिकरैः सुन्दरतरैः ।
त्वयि स्वैरं वर्षत्यधिप न शिरः केन दुधुवे
विमुच्यैकं क्षोणीभरपरवशं पन्नगपतिम् ॥ ९९ ॥

एकच्छत्रं विलसति सुखस्याद्य साम्राज्यमुच्चैः
सर्वस्यापि प्रभवति शुभोदर्कसूरिष्टसिद्धिः ।
तैस्तैर्भावैर्भुवनसुभगं भावुकैः केन चित्रै-
श्चित्रीयन्ते सुकृतसुलभे त्वत्कुमारोदयेऽत्र ॥ १०० ॥

इत्थं स वैतालिकचक्रवालमुखाम्बुजप्रोल्लसितैर्वचोभिः ।
सुधातरङ्गैरिव पूर्णकर्णः स्वपुण्यलीलां परमाममंस्त ॥ १०१ ॥

विशेषविहितश्रियं विविधदानहृष्यज्जनं
स्वबन्धुजनतोचितीकृतचमत्कृतिर्भूपतिः ।
परेऽहनि शुभे सुतं स्वकुलनन्दनं नन्दनं
**जयन्त** इति संज्ञया द्रुतमलंचकारादृतः ॥ १०२ ॥

इति श्वेताम्बरश्रीमदभयदेवाचार्यविरचिते जयन्तविजयनाम्नि महाकाव्ये
श्रीशब्दाङ्के पुत्रजन्मोत्सवो नाम षष्ठः सर्गः ।

सप्तमः सर्गः ।

पुष्पदन्तरुचि कुण्डलद्वयं रत्नराजिमुकुटं च भासुरम् ।
भक्तिभूषितमनास्ततः सुरः स व्यधान्नरपतेरुपायनम् ॥ १ ॥
तस्य भास्वदवरोधसुभ्रुवां मौलिरत्नमिव जीवितेश्वरीम् ।
अर्चति स्म स विभूषणाम्बरैर्विस्फुरत्किरणचित्रिताम्बरैः ॥ २ ॥
उल्बणप्रणयसंचयाञ्चितस्तस्य राजतनयस्य चामरः ।
अङ्गदं विपदपाकृतिक्षमं स व्यधत्त भुजदण्डमण्डनम् ॥ ३ ॥
श्लाघ्यमङ्गलदशोज्ज्वलं····सर्वमप्यकृत सत्क्षमाभृतः ।
सप्रसादमनसो हि देवता सून्वते तनुमतां समीहितम् ॥ ४ ॥
पूजनीयमभिपूज्य पूजया प्राज्यया सुरमनश्व(श्व)रश्रियम् ।
प्रेमदुग्धजलधेरिवोर्मिभिस्तं वचोभिरवदन्नृपस्ततः ॥ ५ ॥
पुत्रजन्मविषयो मनोरथः क्षिप्रमेव सफलत्वमासदत् ।
त्वत्प्रसादवशतः सुरोत्तम स्यान्न वा किमिह कल्पपादपात् ॥ ६ ॥
मय्यभूस्त्वमुपकारकृत्तथा नो यथास्मि सुख(?)वक्तुमीश्वरः ।
भूपतेरिति निशम्य जल्पितं तं प्रणम्य स तिरोदधे ततः ॥ ७ ॥
कुण्डलामरनियुक्तदेवतापञ्चकेन परिपालितः सुखम् ।
शुक्लपक्ष इव चन्द्रमाः क्रमाद्वृद्धिमाप सुदृशोः सुधाञ्जनम् ॥ ८ ॥
अङ्कतोऽङ्कमपरं स नन्दनः क्ष्माभृतः सदसि जीववत्प्रियः ।
राजहंस इव पङ्कजन्मनः पङ्कजान्तरमशिश्रियत्तदा ॥ ९ ॥
कान्तकूर्चकचकर्षणैरसौ स्पर्शतश्चपलकोमलाङ्गजैः ।
मन्मनैश्च वचनैर्ददे पितुर्वागगोचरसुखोदयां दशाम् ॥ १० ॥
तत्र तत्र गमनं स्खलद्गतिक्रीडनानि सुभगानि शैशवे ।
प्रक्षणे क्षणरसे(?)ष्वनादरं चक्रिरेऽस्य वसुधाविलासिनः ॥ ११ ॥
आकलय्य सकलाः कलाः कलाचार्यतोऽपि सततोऽधिकोऽजनि ।
हन्त कौशलगुणेन धीमतां धीविलासविधवो ह्यनेकधा ॥ १२ ॥
तेन नीरधिरिवेन्दुना ततश्चन्द्रमौलिरिव शक्तिपाणिना ।
स्वार्गिणामिव पतिर्जयेन स श्रीजयन्ततनुजन्मना बभौ ॥ १३ ॥

उद्यदङ्गगुरुरामणीयकं कामिनीनयनमोहनौषधम् ।
प्राप यौवनमथैष पुण्यधीर्यत्रिवर्गपरभागभूषितम् ॥ १४ ॥
अन्यदा तु युवराजमात्मजं श्रीजयन्तमकृताकृतिस्मरम् ।
पर्यणाय यदथैष भूभुजां कन्यकाश्चतुररूपसंपदः ॥ १५ ॥
तत्र संततमुदारमानसे प्रार्थना सफलतां गतार्थिनाम् ।
नत्वनङ्गवशवर्त्तिचेतसामन्यदीयमृगशावचक्षुषाम् ॥ १६ ॥
शस्त्रशास्त्रपरभागवेदिनां प्राप स प्रतिभया धुरीणताम् ।
निर्जितेन्द्रियतया च नान्तरैर्बाध्यते स्म सुतरामरातिभिः ॥ १७ ॥
कोऽपि विक्रमकथा तथा प्रथामाप तस्य भुजवीर्यशालिनः ।
कर्णकोटरगता यथा द्विषामादधे मनसि शल्यतुल्यताम् ॥ १८ ॥
तेन कीर्तिलतिका तथाधिकं भूरिदानसलिलैरसिच्यते ।
तारकाकुसुमशालिनी यथा विश्वमण्डपतलेऽपि नो ममौ ॥ १९ ॥
विक्रमक्षितिपतिर्न केवलं पुत्रशालिषु बभार धुर्यताम् ।
तेन दर्पितरिपुप्रमाथिना पार्थिवेष्वपि धरातलेऽखिले ॥ २० ॥
यत्र यत्र सुकुमारपुंगवः संचचार सुभगाग्रणीः पथि ।
तत्र तत्र तमनङ्गविभ्रमात्पूजयन्ति नयनोत्पलैः स्त्रियः ॥ २१ ॥
तस्य कापि परमौचितीगुणस्तोममुत्तमतमं व्यभूषयत् ।
यामिनीरमणरश्मिभासुरं तारहारमिव नायको मणिः ॥ २२ ॥
पूर्वजन्मशुभपासनामृतैर्वर्धितः सुकृतकल्पपादपः ।
प्राज्ययानुपमया फलश्रिया तं तरङ्गितमुदं तदाकृत ॥ २३ ॥
जाड्यतः सकलविश्वदुःसहं संनिगृह्य शिशिरं कुनायकम् ।
तज्जयोर्जित इवाथ सेवितुं श्रीजयन्तमिनमाश्रयन्मधुः ॥ २४ ॥
श्रीवसन्तनृपतेः समागमे कोकिलध्वनिरुदच्छल.... ।
बन्दिवृन्दवदनाम्बुजान्तरं प्रोल्लसज्जयजयारवोपमः ॥ २५ ॥
दाक्षिणात्यपवनो यथा यथा प्रासरत्प्रसृमरस्मरानलः ।
प्रेर्यमाण इव तेन भानुमानुत्तरां दिशमगात्तथा तथा ॥ २६ ॥

केरलीकुचतटीविलासिनः कुन्तली चलितकुन्तलाञ्चलाः ।
सिंहलीवदनचुम्बनप्रियाः संचरन्ति मलयाचलानिलाः ॥ २७ ॥
तुल्यतां दयितचुम्बनोचितैः कामिनीविकचवक्रपङ्कजैः ।
भृङ्गपेयमधुभिर्ययासुभिर्वारिजैः समुदिताविवारिषु ॥ २८ ॥
कौन्दपुष्पमपहाय जर्जरं निर्गुणं धनुरजायताधिकम् ।
चम्पकप्रसवचापमण्डलीलाभलोलुभमना मनोभवः ॥ २९ ॥
चञ्चरीकनिकरम्बचुम्बिताश्चम्पकेषु कलिकाश्चकासिरे ।
मन्मथेन पथिकप्रमाथिना निर्मिता विषशिखा इवेषवः ॥ ३० ॥
माधवप्रणयिना मनोभुवा मानखण्डनविधौ मृगीदृशाम् ।
कोमलोऽपि कलकण्ठकामिनीपञ्चमध्वनिरमीयतास्त्रताम् ॥ ३१ ॥
यद्विलिह्य सहकारमञ्जरीः कूजितं किमपि बालकोकिलैः ।
तद्बभार विषमेषुकार्मुकज्यानिनादपदवीं विलासिषु ॥ ३२ ॥
काननेषु कुरुविन्दपाटलाः पाटला स्मरवरूथिनीमुखे ।
सर्वतो बत विभान्ति लोहिता वैजयन्त्य इव साधवोद्धृताः ॥ ३३ ॥
चञ्चरीकनिकरः कृपापरः शाखिनां शिरसि संरुवन्मुहुः ।
व्याजहार विरहिप्रमाथितां मन्मथस्य पथिकव्रजेष्विव ॥ ३४ ॥
तत्र चित्रितसमस्तकाननेऽनेहसि क्षपितविप्रयोगिणि ।
प्राप तापकलितेषु मानिनीमानसेषु मदनोऽतिविस्तृतिम् ॥ ३५ ॥
दक्षिणानिलचलल्लताभुजां वीक्ष्य ताण्डववतीं मधुश्रियम् ।
मन्मथेन विभुनापवर्जितानीव नीपकुसुमानि रेजिरे ॥ ३६ ॥
क्षीरनीरनिधिचारिमञ्जुलं मुञ्चतापि करजालमुज्ज्वलम् ।
रोहिणीप्रणयिना विनिर्ममे स्वैरिणीजनमनो मलीमसम् ॥ ३७ ॥
विषययुक्तनवसुभ्रुवां सखीवृन्दमाकुलमनो तु मन्दिरम्(?) ।
पृच्छदुच्चकलकोकिलध्वनिः स्तम्भनौषधमिदं तदाभ्रमत् ॥ ३८ ॥
मारुतं शरमुपाददे स्मरः कौसुमं तमपहाय सायकम् ।
नूनमादधदनूनसौरभं यन्ममाथ मलयानिलोऽध्वगान् ॥ ३९ ॥

अध्वगप्रणयिनीषु दुर्दशां वीक्ष्यते करुणयेह मल्लिका ।
रोदतीव विपुलाश्रुभिर्भृशं स्पन्दमानमकरन्दबिन्दुभिः ॥ ४० ॥
यद्बभूव सहकारमञ्जरीशुद्धकण्ठकलकण्ठकूजितम् ।
मानिनीनिवहमानि संततेस्तत्प्रवासपटहस्फुटक्रियम् ॥ ४१ ॥
माधवेन कुसुमेषुभूपतेः क्रीडनाय कलधौतपर्वताः ।
निर्मिता इव विभान्ति चम्पका स्मेरगौरकुसुमावगुण्ठिताः ॥ ४२ ॥
कामविश्वविजयप्रशस्तयः पुष्पसंचयविनिर्मिताक्षराः ।
चैत्रमासि नवमालिकालता लोकलोचनकृतोत्सवा बभुः ॥ ४३ ॥
स्वर्णतोरणविलासदोलयान्दोलनैः कृतगतागतैर्मुहुः ।
वीक्षितुं त्रिदिववामचक्षुषोऽभ्यासभङ्गिमिव कुर्वतेऽङ्गनाः ॥ ४४ ॥
श्यामवृत्तमुपरिस्थषट्पदं(?) किंशुकस्य कुसुमं नवं बभौ ।
स्वं निधानमिव मुद्रितं जतुन्यासतः सुरभिणाधरोर्ध्वयोः ॥ ४५ ॥
किंशुकस्य शुकचञ्चुचातुरीचारिमाणि कुसुमानि रेजिरे ।
विभ्रमं मधुवधूवनश्रियो वाससां दधति शोणरोचिषाम् ॥ ४६ ॥
त्यक्तपात्रनिकरः समन्ततश्चया(?) विरहितोऽस्सदाश्रयः ।
इत्यमूनि मधुकानि दुःखितानीव पेतुरवनीतले ततः ॥ ४७ ॥
पाटला विकचपुष्पसंपदोऽन्यैव काचन लिपिर्विजृम्भते ।
दिक्षु वल्गति यदीयसौरभेऽन्यत्र सौरभकथैव मुद्रिता ॥ ४८ ॥
माधवी विकचपुष्पलोचनैः पश्यतीव मधुभूपसंपदम् ।
यूथिकापथमुपानयद्दृशां क्षीरसागरमिव स्वकान्तिभिः ॥ ४९ ॥
प्रेयसां नवसमागमे मधौ तत्क्षणोद्यदनुरागसागरे ।
अर्पयन्ति बकुलश्रियः स्रजं स्निग्धमात्महृदयं च सुभ्रुवः ॥ ५० ॥
वीक्ष्य पुष्पितमशोकशाखिनं त्र्यम्बकाम्बकहुताशशङ्कया ।
उद्विलासलहरीस्तरङ्गिणीरङ्गमाः शरणिमादधे स्मरः ॥ ५१ ॥
चर्चरीष्वनुपदं विलासिनीवृन्दगीतकलपञ्चमध्वनिः ।
उल्ललास कुसुमेषुभूपतेः कोपहुंकृतिरिवावनीजये ॥ ५२ ॥

चर्चरीषु परमोत्सवे मधौ स्त्रैणविभ्रमविलासनर्तनैः ।
कौशुकैः सरसतां नये ययुर्योगिनो दृषद एव तेऽथवा ॥ ९३ ॥
घर्मवृष्टिशिशिरैररुंतुदाः सर्वदैव ऋतवोऽपरेऽङ्गिनाम् ।
सर्वकामदतया पुनः····श्रीवसन्तसमयः प्रियंकरः ॥ ९४ ॥
कस्य कस्य न तरोर्यथोचितैः श्लाघ्यपुष्पफलपत्रसंचयैः ।
रामणीयकविशेषनाटके सु(सू)त्रधारपदवीं दधौ मधुः ॥ ९५ ॥
सर्वतः प्रथितरामणीयकं प्रायसो जितसमाधिवैभवम् ।
योगिनामपि किमन्यदुच्यते स्त्रीविलाससरसावधौ(?) मधौ ॥ ९६ ॥
गन्धलुब्धमधुपाङ्गनारुतव्याजगीतगुणपुष्पभूषणम् ।
द्वारपालविनिवेदितस्ततोऽद्या(ध्या)नपाल उपभूपमाययौ ॥ ९७ ॥
नासिकापुटनिपेयसौरभैः पञ्चवर्णकुसुमैर्विनिर्मितम् ।
पुष्पकन्दुकमयं समर्पयन्विक्रमक्षितिपतिं व्यजिज्ञपत् ॥ ९८ ॥
त्वं कुमार इव देव सांप्रतं श्रीवसन्तऋतुरेष राजते ।
यः प्रयाति सुमनः प्रशस्यतां विश्वजिष्णुविषमायुधोदयाः ॥ ९९ ॥
मेघमण्डलविलोकनोल्लसत्तोषताण्डवजुषः शिखण्डिनः ।
तत्र तूर्णमतिशेरतां जना दर्शनेन भवतो मधूत्सवे ॥ ६० ॥
त्वन्निदेशवशतोऽथवा भवन्नन्दने विशति काननक्षितौ ।
तत्र नन्दनवनावनाविव स्वैरमेतु परिपूर्णतां महः ॥ ६१ ॥
आज्ञया पितुरथ प्रथीयसा वैभवेन नलकूबरोपमः ।
प्राप चैत्ररथचारु तद्वनं नन्दनः सुवदनाभिरावृतः ॥ ६२ ॥
सानुरागहृदयं सुलोचना लोचनैर्मधुकरैरिवोच्चकैः ।
शिश्रिये स सकलाङ्गचारिमासीमसौरभविभूतिलोलुपैः ॥ ६३ ॥
गीयते स्म सुदृशां गणैस्ततस्तच्चरित्रमतिमात्रचित्रदम् ।
कौतुकादुपनतैर्यथाधिकं किंनरैरपि शिरो व्यधूयते ॥ ६४ ॥
सर्वलोकरतिदानमात्मनो दर्शनान्नयवतो मते मतम् ।
इत्यमुष्य किल कुण्डलच्छलाच्छंसति स्मरवचोहरद्वयी ॥ ६५ ॥

अस्य विद्धि सखि किंचनाद्भुतं लोचनत्रयमुमापतेरिव ।
एकमुल्बणविवेकलक्षणं विश्वयौवतविमोहने परे ॥ ६६ ॥
भाति हारलतिकास्य वक्षसि प्रार्थितास्पदनिवासतोषतः ।
उत्तरीयकमिवेन्दुविभ्रमं नृत्यवेगवशतश्च्युतं श्रियः ॥ ६७ ॥
अस्य वीक्ष्य ललितं तथाङ्गना जल्पितं हसितमिङ्गितं गतम् ।
सानुरागमति ताः परस्परं वर्णनं श्रवणगोचरं व्यधुः ॥ ६८ ॥
(चतुर्भिः कलापकम्)

हावभावसविलासविभ्रमैस्तत्र तत्र विहिताप्सरोभ्रमैः ।
विश्वविस्मयरसं स यौवतैर्गीतनृत्यकलयान्वभाव्यत ॥ ६९ ॥
तुङ्गवंशशिखराग्रनर्तनैश्चक्रचोरविजयिभ्रमिक्रमैः ।
लोसिकातिशयदुष्करैर्नृणामाचकर्ष हृदयं समं धनैः ॥ ७० ॥
नाटकाभिनयनैर्निरन्तरैस्तन्नदीष्णशुभपात्रसूत्रितैः ।
भूरिभङ्गिरसपाकपेशलैस्तत्र सोऽभजदपूर्वकौतुकम् ॥ ७१ ॥
विश्वविश्ववलयादुपागतैः कौतुकादिव समस्तकौतुकैः ।
स व्यधत्त जननेत्रपारणां श्रीजयन्तयुवराजशेखरः ॥ ७२ ॥
रूपयौवनविलासऋद्धिभिर्दानवर्षुकतयाद्भुतैर्गुणैः ।
तत्र तस्य सुभगं भविष्णुता कस्य कस्य न ननर्त चेतसि ॥ ७३ ॥
काञ्चीकाञ्चनकिंकिणीरणरणत्कारापनिद्रस्मरं
दोलान्दोलनकौतुकं मृगदृशामालोक्य लोकोत्तरम् ।
तत्रासक्तमनाः प्रयाति नलिनीकान्तः प्रशान्तैर्हयै-
र्मन्दंमन्दमतीव वृद्धिमधिकां पुष्णन्त्यमी वासराः ॥ ७४ ॥
एते श्रीखण्डखण्डैः प्रियसुहृद इव प्रापितामोदमुद्रा
दोलाखेलत्तिलङ्गीघनजघनतटस्फारफारैः स्खलन्तः ।
कावेरीवीचिचाटुव्यतिकरसुभगंमन्यसीमा रमन्ते
वाताः स्पर्शच्छलेन श्रवदमृतरसाश्चैत्रमैत्रीपवित्राः ॥ ७५ ॥
ज्योत्स्ना पञ्चमकोकिलध्वनिवनश्रीमण्डलाधीश्वरं
स्त्रैणप्रेमविलास''''ललितैः पुष्टं महामन्त्रिभिः ।

साम्राज्यं मधुरं मधोर्मधुसखस्वाधीनसंपद्भरं
वैराग्याञ्चितचेतसामपि चिरं केषां न रागास्पदम् ॥ ७६ ॥
स्त्रैणैः पादप्रहारैः कुचकलशतटीताडनैरीक्षणाद्यै-
र्निश्चिन्तन्ये(?)प्यशोकप्रमुखविटपिनां पुष्पराजिच्छलेन ।
व्यक्तः कामानुरागः प्रसरति पुलकैः कामुकानामिवास्य
प्राज्ये राज्ये विलासातिशय इह मधौ कस्य धत्ते न चित्रम् ॥ ७७ ॥
इति बहुविधविस्मयाभिरामा नृपतिनयेन विलोकिता वनश्रीः ।
इयमतिसुमनाः प्रियेण सुभ्रूर्निजमिव रूपफलं समाससाद ॥ ७८ ॥

इति श्वेताम्बरश्रीमदभयदेवाचार्यविरचिते जयन्तविजयनाम्नि महाकाव्ये
श्रीशब्दाङ्के वसन्तवर्णनो नाम सप्तमः सर्गः ।

---

## अष्टमः सर्गः ।

अथ सरसमपश्यत्तत्र तां **श्रीजयन्तो**
युवतिनिवहदोलान्दोलनानन्दकेलिम् ।
त्रिभुवनजनहृद्यां यत्र सौभाग्यभङ्गीं
भजति रतिविलासी पूर्णिमायामिवेन्दुः ॥ १ ॥
सरभसमिह दोलान्दोलनैः कापि भाति
श्रवणयुगलखेलत्कुण्डलैः पक्ष्मलाक्षी ।
उभयतटविटङ्कप्रोल्लसच्चन्द्रसूर्या
प्रसृमरगुरुशोभा व्योमलक्ष्मीरिवोच्चैः ॥ २ ॥
कुचकलशनिपातप्रोच्छलत्तारहार-
प्रचुररुचिवितानैर्व्योम्नि दोलाधिरूढा ।
प्रबलपवनरङ्गद्व्योमगङ्गातरङ्ग-
श्रियमिव विदधाना भाति काचिन्नतभ्रूः ॥ ३ ॥
वियति चलितदोलान्दोलिताया मृगाक्ष्याः
पटुपवनतरङ्गैरुत्तरीयेऽपनीते ।
दिशि दिशि विसरद्भिर्लोललावण्यपूरै-
र्हृतहृदयनेत्राश्चक्रिरे के युवानः ॥ ४ ॥

इयमिह हि सलीलान्दोलिता व्योम्नि दोला
सुभगगुणविलासा चापयष्टिः स्मरस्य ।
यदि भवति सबाणा वाणिनीभिः सदासौ
त्रिभुवनमपि जेतुं हेलयालंभविष्णुः ॥ ५ ॥

व्रजति वियति काचिल्लोलदोलाधिरूढा
सह युवजननेत्रैः पद्मपत्त्रायताक्षी ।
चलति तदनु धन्यंमन्यदीर्घप्रसर्प-
द्भुजगभुजधृतासौ किं चितैरेव सार्द्धम् ॥ ६ ॥

नवनवरसभङ्ग्याः श्रीजयन्ताभिधान-
व्यतिकरकलगीतध्वानतानच्छलेन ।
चकितहरिणनेत्राः प्रह्वमाह्वा नयन्ति
स्मरमिव निजदोलान्दोलनालोकनायाः ॥ ७ ॥

अधरितरतिरूपं कामिनीचक्रवालं
दिशि दिशि गुरुदोलाकेलिकौतूहलैस्तैः ।
विदधदिव बभासे श्रीजयन्तस्य नेत्रा-
मृतलहरिसपल्लैरातिथेयं प्रथीयः ॥ ८ ॥

त्वरितमथ जयन्तीनाथसूनुः प्रसूना-
वचनविरचनाय प्रेयसीचक्रवालैः ।
मधुरवचनवीचिप्रेरितः संचचार
प्रिययुवतिवशे वा किं न यूनां मनांसि ॥ ९ ॥

करतलपरिसर्पत्ताम्रकान्तिच्छलेन
प्रबलघुसृणपङ्कैरर्चनं संविधाय ।
अभिनवतरुलक्ष्म्याः प्राज्यसौरभ्यपुष्पा-
वचयविरचनायां चातुरी चक्रिरे ताः ॥ १० ॥

रभसतरलिताभिस्ताभिरुच्चीयते स्म
स्मितकुसुमसमूहस्तत्र बालद्रुमाणाम् ।

तदनु करजनिर्यत्कान्तिपीयूषवर्षैः
क्षतकृत इव तापः शान्तिमानीयते स्म ॥ ११ ॥

कुसुमशरनरेन्द्रस्यादुधोपायनानि
प्रगुणयितुमिवैका(?)कामिनी पुष्पजातम् ।
त्वरितमवचिकायाक्रम्य रम्यस्तनान्तैः
शिखरिशिखरशाखाशेखरेभ्यः सुखेन ॥ १२ ॥

भ्रमररवमिषेणालापपीयूषवर्षाः
स्मितरुचिरतरस्याः सौरभेणाभिरामाः ।
इह हि सुमनसोऽपि स्त्रैणजात्या समाना-
स्तदपि समुदमूल्यं ताभिरुद्यन्मदाभिः ॥ १३ ॥

प्रसृमरमकरन्दोद्दामलक्ष्मीनिवासे-
ऽनुपमकुसुमकोशे लुप्यमाने समन्तात् ।
नरपतिरमणीभिः कोऽप्यलीलां विरावः
समजनि हृतचित्तः को न वा पूत्करोति ॥ १४ ॥

गगनतलतरङ्गत्तुङ्गगौराङ्गनाभिः
क्षितिधवयुवतीनां द्रागलक्ष्मीकृतेषु ।
अवचयविधिरासीच्चम्पकेषु स्मितेषु
भ्रमरमिथुनलीलालीनतालोकनेन ॥ १५ ॥

चरणकमलमेकं पादमूले सहेलं
मृदुभुजयुगलं च स्कन्धदेशे निवेश्य ।
सरससुरतकेलिप्रोक्तमार्गेण काचि-
त्प्रियमिव तरुमुच्चैरारुरोहायताक्षी ॥ १६ ॥

अलिकुलरमणीयैर्मांसलः पुष्पजातैः
सरभसमधिरूढः केसरः सुन्दरीभिः ।
त्रिभुवनसुभगाभिः पुष्पचापस्य पुण्यैः
फलित इह नवीनः कल्पशाखीव रेजे ॥ १७ ॥

मधुकलसमनाभिं स्फारसौरभ्यसारं
कुसुमनिवहमेतां यं गृहीतुं प्रयान्ति ।
तदभिरुचितवासैस्ता अदृश्यन्त भृङ्गैः
परपरिभवकारी कः किल प्रीतिमेति ॥ १८ ॥

तरुशिखरगतायास्तत्र कस्याश्चिदुच्चै-
र्मरकतमणिरोचिर्मेचका काययष्टिः ।
विकसितसितपुष्पैर्बिम्बितैर्द्योतते स्म
स्फुरितरुचिरतारा व्योमवीथीव रात्रौ ॥ १९ ॥

कुसुममधिरसान्द्रैरावृतं तत्र पत्रैः
परमपरिमलाढ्यं सस्वनं संचरद्भिः ।
मधुकरनिकुरम्बैः कः पिबेत्यावचिक्ये
भवति हि मलिनानां संगमो भङ्गहेतुः ॥ २० ॥

कुवलयदलनेत्रां पक्वनारङ्गनव्य-
त्वगुदितरसधाराक्षेपतो व्याकुलाक्षीम् ।
विदधदथ **जयन्तो**ऽन्यां चुचुम्बे तदग्रे
गुरुरिह चतुरत्वे कामदेवोऽस्य नूनम् ॥ २१ ॥

अतिचतुरतयैकाः शाखिशाखाशिखासु
स्मितबहुविधपुष्पाकाङ्क्षया चञ्चलाक्ष्यः ।
द्रुतपदमनिरोहन्ति स्म तत्पादशङ्का-
परिकलनभुवस्तां **श्रीजयन्तं** भियस्तु ॥ २२ ॥

कुचकलशनितम्बस्तम्बभारेण नम्रा
स्खलितगतिपदाब्जा बालवृक्षात्पतन्ती ।
त्वरितमथ भुजाग्रे कापि कान्तेन दध्रे
धुरि तु सुभगकान्ताचक्रवालस्य बाला ॥ २३ ॥

तरुणतरतरूणामात्तपुष्पास्तरुण्यः
करनखशिखराणां शोणकान्तिच्छटाभिः ।

विदधुरिव कृतज्ञास्तत्प्रवालद्रुमत्वं
फलति सहृदयेषु क्षिप्रमेवोपकारः ॥ २४ ॥
उदतरदवचीयस्त्रैणमाशु द्रुमेभ्यः
कुसुमपटलिमाढ्यं भावुकं सौरभेण ।
व्रजति किमु न नाशं वैभवं कुस्थितीना-
मिति वददिव नादैर्मञ्जुमञ्जीरकाणाम् ॥ २५ ॥
तपनकिरणजन्यप्रौढसंतापशान्त्यै
मृदुशिशिरसुगन्धैर्मारुतस्यार्पिताङ्ग्यः ।
हिमसमकुसुमानां भूषणैर्भूषितास्ताः
क्षणमतुलविलासा व्यश्रमन्नश्रमायाम् ॥ २६ ॥
बहुविहगनिनादैर्बन्दिवृन्दैरिवोक्ते
विकटविटपवीथीच्छायया शीतमार्गे ।
पृथुसरसि स हंसीमण्डलेनेव हंसः
समचरदथ तस्मिन्सार्द्धमन्तःपुरेण ॥ २७ ॥
चुलुकमनुकरोति स्वच्छमच्छोदमग्रे
भजति न महिमानं यस्य पम्पासरोऽपि ।
परिभवपदमर्ते(?)मानसं श्रीविवादैः
स्पृहयति च विभूतेस्ताण्डवं दुग्धसिन्धुः ॥ २८ ॥
दिनकरपरितप्ता दिग्गजा वारिकेलौ
दधति खलु [न]यन्तः पूतरीपोतशङ्काम् ।
कुलिशमयविमुक्ता बालशैवालवल्ली
किशलतटकुटीरे यस्य चास्थुर्नरेन्द्राः ॥ २९ ॥ (?)
लसति गुरुतरङ्गालिङ्गितव्योमरत्ने
प्रतिफलनमिषेणाम्भोदमाला च यत्र ।
अमृतरसमिवोच्चैः पातुकामा निकामं
परिहृतदहनाभक्षारनीरार्णवाम्बु ॥ ३० ॥

मधुकरनिकुरम्बैर्बम्भ्रमद्भिः समन्ता-
दुपरि परिमलाद्यैः सेरपद्मासनस्था ।
अभिनवशिखिपिच्छच्छत्रशोभाभिरामाः
प्रवरपयसि यस्मिन्राजहंसा ललन्ति ॥ ३१ ॥

विकसितसितपद्मैर्वर्मितं वारि यस्मि-
न्धरितनव....मुक्ताचूर्णतुल्यं विभाति ।
फणिपतितनुभासां चक्रवालं धरित्री-
वलयकुतुकवीक्ष्योत्कण्ठयेवावतीर्णम् ॥ ३२ ॥

भयभरशिथिलाङ्गाद्द्राङ्गुणा ग्रस्यमाना-
त्कथमपि पतिताधश्चन्द्रतश्चन्द्रिकेयम् ।
गगनपतनदुःखात्क्रन्दमानेव यस्मि-
न्गुरुलहरिविरावैर्लक्ष्यतेऽम्भोमिषेण ॥ ३३ ॥

रमण इव सहेलं श्रीजयन्ते पुरस्थे
कुवलयनयनैः श्रीर्यत्र तं पश्यतीव ।
पवनचलितवीचीबाहुभिर्नृत्यतीव
भ्रमरविरसनादैस्तद्गुणान्गायतीव ॥ ३४ ॥

मधुरसविभवेन स्पर्द्धते नो धराग्रै-
ररुणिमसुकुमारत्वेन पाणिप्रवालैः ।
कमलवनमितीवासूययोत्पाटयन्ती-
रविशदथ जयन्तस्ताः पुरस्कृत्य तत्र ॥ ३५ ॥

मधुभिरिव विवृद्धैः पुण्यलावण्यपूरै-
रलिभिरिव विलोलैर्लोचनैश्चाप्तशोभैः ।
पयसि विदधुरास्यैः कण्ठदघ्ने तदानी-
मपरकमलखण्डाडम्बरं तास्तरुण्यः ॥ ३६ ॥

अथ करजलयन्त्रैर्वारिपूरं किरद्भिः
स्फुरति वियति वर्षाडम्बरेऽन्योन्यमुच्चैः ।

जलललितिषु तासां प्रीतिवल्लीविलासं
　कलयति स च शोषं मानमुद्राजवासः ॥ ३७ ॥
शुचिरुचिरुचिमुक्ताहारसौभाग्यभङ्गीं
　विदधति जलधाराः कण्ठपीठे लुठन्त्यः ।
विकटकुचतटान्तःस्फारकर्पूरपूर-
　प्रभवमकरिकाणां विभ्रमं चाङ्गनानाम् ॥ ३८ ॥
मुखकमलविसर्पद्भूरिसौरभ्यलुभ्य-
　द्भ्रमरनिकरकल्पे कुन्तलानां कलापे ।
विकचविचकिलश्रीस्फूर्जितं तर्जयन्ति
　सितनलिनमुखीनां कान्तमुक्ताम्बुभाराः ॥ ३९ ॥
तरति हृदि वहन्ती विश्वविश्वंभराया
　भरमपि भुजदण्डैर्बिभ्रतं प्राणनाथम् ।
सरसि जलमगाधं कापि कान्ता न चित्रं
　पृथुतरकुचतुण्डीडम्बरालम्बना हि ॥ ४० ॥
पयसि लघु निलीनः कौतुकेनापकर्ष-
　त्परिहितसि[च]यान्तं दक्षयालक्षि कान्तः ।
तदनु च स तयोक्तः कोऽपि चौरोऽयमेवं
　सरसविधि बबन्धे बाहुपाशेन सद्यः ॥ ४१ ॥
क्वचन जघनबिम्बे क्वापि तुङ्गस्तनान्ते
　क्वचिदपि मुखपद्मे क्वापि कण्ठेऽम्बुपूरम् ।
प्रगुणितकरयन्त्रैरक्षिपत्प्रेयसीनां
　करकमलमिवायं कामकेलौ विलासी ॥ ४२ ॥
बहुविधजललीलाकौतुकैः प्रीतिचित्ताः
　पथमनुसृतवत्यः श्रीजयन्तस्य सर्वाः ।
जलनिबिडदुकूलव्यक्तनिम्नोन्नताङ्ग्यः
　सरसमुदरसंस्ताः श्रीविलासात्सरस्तः ॥ ४३ ॥ (?)

प्रसरदगुरुधूमाध्यासितैः केशपाशै-
मुखशशधरदूरोत्सारितध्वान्तकल्पैः ।
शुचिरुचिरदुकूलैर्मण्डनैश्चानुकूलै-
रधितटमभिरामास्तस्थुरस्यैव रामाः ॥ ४४ ॥

पितुरथ ललितैस्तैस्तोषपीयूषवर्षं
विदधति युवराजे तत्र संध्याविरासीत् ।
प्रगुणयितुमिवोच्चैः स्फारशृङ्गारभङ्ग्या
कुवलयदलनेत्राः संगमाय प्रियाणाम् ॥ ४५ ॥

प्रथममुदयशीले मौलिमाणिक्यकान्ति-
स्तदनु गगननद्यां स्वर्णपद्मोपमोऽभूत् ।
रविरपरगिरिश्रीभालकालेयबिन्दु-
द्युतिरथ वमुरन्तः स्फु क नो(?)मण्डनाय ॥ ४६ ॥

दधति दश दिशोऽथ स्निग्धसंध्याभ्रशोणा
विविधविहगराजीकूजितो जागरूकाः ।
मसृणघुसृणभासां भूपतेः सुन्दरीणां
प्रतिकृतिमिह सिञ्जन्मञ्जुमञ्जीरकाणाम् ॥ ४७ ॥

अथ दिवसमशेषं रत्नगर्भां विलोक्य
प्रविशति दिननाथः सूत्ररत्नाकरान्तः ।
समधिकतररागालिङ्गितः श्रीजयन्तः
प्रतिमपुरुषरत्नालोकते कौतुकीव ॥ ४८ ॥

सुरकरिधुतगङ्गाशीकराकारजैत्रै-
रथ कतिपयमात्रैस्तारकैर्व्योम कीर्णम् ।
श्रयति भुवनलक्ष्मीः सूत्रितोद्दाममल्ली-
मुकुलशबलितान्तः खेलधम्मिल्ललीलाम् ॥ ४९ ॥

विशदविशदभविष्यच्चन्द्रिकावल्लिबीजै-
रिव गगनमशेषं तारकैस्तारकान्ति ।

सितकुसुमसमाजोत्तंसितैरिन्द्रनीलो
　पलशकलशमुत्थैः कुट्टिमैः साम्यमाप ॥ ६० ॥

कलितमिव तमालैः कुन्तलीकुन्तलाली-
　रुचिभिरिव तताभिश्चुम्बितं विश्वविश्वम् ।
स्थगितमिव समन्तादञ्जनै राजपट्टै-
　र्घटितमिव चकासे व्याप्तमिद्धैस्तमोभिः ॥ ६१ ॥

अभिनवमृगनाभीपङ्कक्लृप्ताङ्गरागा
　भ्रमररुचिदुकूलैर्वेषमुद्रां दधानाः ।
मरकतकृतभूषाः पक्ष्मलाक्ष्यः सलीलं
　रमणमभिसरन्ति स्वैरमिद्धेऽन्धकारे ॥ ६२ ॥

सपदि दधति जातैकातपत्रं प्रभुत्वं
　जगति तिमिरराजे लुप्तभूभृत्समाजे ।
तरणितरुणवीरैस्तैरवस्कन्दहेतो-
　रिव बहुविशिखाढ्यैर्भूरिदीपैरदीपि ॥ ६३ ॥

तिमिरपटलयोगं हर्तुकामो जगत्या-
　स्तदनु च नयनानामौषधीशः क्रमेण ।
अमृतमयशलाकासंनिभां मन्दमन्दं
　रुचिमुचितकलाभृत्तत्र चिक्षेप दक्षः ॥ ६४ ॥

क्षितिपरिभवहेतुध्वान्तसंतानकोपा
　दिवसमधिकरागं मण्डलं तत्र राज्ञः ।
निचितमिव चकोरीचक्षुषां वा मयूखै-
　रुदयशिखरिचूडां चुम्बमानं चकासे ॥ ६५ ॥

क्षणमदधत पूर्वाशावधूवक्त्रपद्मे
　घुसृणतिलकलक्ष्मीडम्बरं चन्द्रबिम्बम् ।
तदनु किरणमुक्ताजालकस्फीतशोभं
　मदनधरणिभर्तुः पुण्डरीकश्रियं च ॥ ६६ ॥

अभिदुरतिमिरौघम्लेच्छसङ्गाशुचित्वं
प्रशमयितुमिव ·········वामलक्ष्म्याः ।
विनिहितमिव रेजे पावनं गाङ्गमम्भः
शशिकलशविसर्पच्चन्द्रिकाचक्रवालम् ॥ ५७ ॥

तिमिररिपुजयाय प्रस्थितस्याथ राज्ञो
रुचिरकिरणवीरैः प्रोल्लसद्भिः समन्तात् ।
जगदखिलमकारि क्षिप्रमेवाविपक्षं
किमिव वसुमतां न क्ष्मातले साध्यमस्ति ॥ ५८ ॥

सह तिमिरभरेण स्वैरिणीनां प्रमोदः
प्रशममगमदुच्चैश्चन्द्रिकायां लसन्त्याम् ।
चतुरतरचकोरप्रेयसीभिः सहाभू-
त्रिभुवननयनानां किं च पीयूषपानम् ॥ ५९ ॥

दधति मुदमुदारां क्वापि चञ्चच्चकोरी-
ध्वनिविघटिततन्द्राश्चन्द्रिकायां चकोराः ।
क्वचिदरतिमयं ते चक्रवाकाः सशोकाः
सुखमसुखमिह स्यादात्मकर्मानुरूपम् ॥ ६० ॥

मदकलकलकण्ठीकोमलः कालिमासौ
रजनिरमणबिम्बे लक्ष्यतेऽन्तर्निलीनः ।
प्रसभमभिरहस्यध्वान्तभूभर्तुरेत्य
श्रित इव युवराजः प्राणितत्राणहेतोः ॥ ६१ ॥

भुवनमपतमिश्रं(स्रं) सर्वतोऽपि प्रपेदे-
ऽभ्युदयमुदितराज्ये कौमुदीजीवितेशे ।
तदनु च कुसुमेषोर्मार्गणैः पञ्चसंख्यै-
रपि भुवनविजित्रैर्लक्ष्यतां को न नीतः ॥ ६२ ॥

तिमिररिपुमयस्य प्रौढिमुल्लास्य दूरं
कुवलयरमणीयां चन्द्रिकासंपदं च ।

अपरदिशि चचाल क्षोणिपालायमानः
कृतसकलविधेयो यामिनीकामनीशः ॥ ६३ ॥

विगलितवसुशोभावैभवं स्वं विदित्वा
तदनु शिशिररश्मिर्जातविच्छायकायः ।
अपरगिरिशिरोभिः काममन्तर्हितोऽभू-
द्विघटितविभवानां स्फूर्जितं ह्रीपदं हि ॥ ६४ ॥

अनवरतमखण्डं मण्डलं निष्कलङ्कः
प्रथयति कमलानां काममुन्निद्रतां च ।
अयमिति परिभाव्य क्ष्मापतेर्विक्रमस्य
प्रविशति हिमरश्मिर्लज्जयेवाम्बुराशिम् ॥ ६५ ॥

अथ सरसविनोदैः प्रीतिमुद्भाव्य देव्या
निधुवनरसमुद्रानिद्रया मुद्रिताक्षः ।
रतिपतिरिव रत्या गाढमालिङ्गिताङ्गः
क्षणमिव रजनीं स क्षोणिपालो निनाय ॥ ६६ ॥

नागानां क्रमशृङ्खलाखणखणध्वानैः प्रबोधक्षणे
संपत्सुन्दरमन्दुरोदरचरद्दृप्ताश्च हेषारवैः ।
माद्यन्मङ्गलतूर्यवर्यनिनदप्रोद्दामलीलायितै-
स्तस्य क्षोणिपतेः प्रियेव चतुरा निद्रामुचल्लोचने ॥ ६७ ॥

मानोत्तानतया सखीषु कलुषाः प्रेङ्खोलरोषाश्चिरं
दूतीषु स्वयमानतेऽपि दयिते याश्चक्रिरे वक्रताम् ।
ताः प्रातश्चरणायुधध्वनिमिभादाज्ञामिवाप्य स्मर-
क्षोणीशस्य समुत्सुकाः प्रियपरीरम्भं स्त्रियस्तन्वते ॥ ६८ ॥

विस्मेराम्भोजराजीमधुरमधुरसप्रातराशाभिलाषा-
द्यावद्भृङ्गानुयाताः सुरभिसुमनसः पादपान्नर्तयन्तः ।
प्रातः शास्त्रेषु मान्या मदननरपतेर्वान्ति वातास्त एते
रत्यन्तक्लान्तवातास्तनतटघटितस्वेदमास्वादयन्तः ॥ ६९ ॥

माद्यन्मण्डलचक्रवालकलितं स्थेयः सुखश्रीकरं
संख्यातीतरथाश्च वैभवपदं नक्षत्रलोपावहम् ।
शङ्के सूरमपूर्वमीक्षितुमयं त्वं कौतुकीवाधुना
पूर्वक्ष्माधरमारुरोह नृपते पाथोजिनीवल्लभः ॥ ७० ॥
मद्वल्लभां कैरविणीमुपेत्य चुम्बन्त्यमी रागवतेति राज्ञा ।
आमोचयत्यङ्कजगुप्तिनद्धान्मित्रः प्रभाते वसुभिर्द्विरेफान् ॥ ७१ ॥
द्वारे तिष्ठति ते नरेन्द्र सुभग श्रीराजितं राजकं
सेवां कल्पतरोरिवेप्सितफलां हर्षाच्चिकीर्षच्चिरम् ।
सद्यो भूषयितुं तदर्हसि मणिभ्राजत्सभामण्डपं
जज्ञे मङ्गलपाठकोदितगिरामित्थं विलासस्ततः ॥ ७२ ॥
(पञ्चभिः कुलकम्)

स्मरविलसितवर्यां तां परित्यज्य शय्यां
करतलमवलम्ब्य स्वप्रतीहारिकायाः ।
जयजयजयशब्दैः सार्धमुत्थाय भेजे
प्रचररुचि सभायां रत्नसिंहासनं सः ॥ ७३ ॥
अथैत्य विनमच्छिरोमुकुटकोटिरत्नाङ्कुर-
स्फुरत्किरणकोरकोत्करकरम्बिताङ्घ्रिद्वयम् ।
क्ष्मायुवतिवल्लभैः सकलराजलोकैः समं
स विश्रुतपराक्रमः प्रणयतः प्रणेमे प्रभुः ॥ ७४ ॥
दृशा प्रसादाञ्चितमीक्षितास्ते प्रभोः पुरस्तादुचितासनस्थाः ।
चक्रुः श्रियां धाम्नि तदास्यचन्द्रे लीनं चकोरोपमयात्मचक्षुः ॥ ७५ ॥

इति श्वेताम्बरश्रीमदभयदेवाचार्यविरचिते जयन्तविजयनाम्नि महाकाव्ये श्रीशब्दाङ्के दोलाविलासपुष्पावचयजलकेलिसूर्यास्तचन्द्रोदयोऽष्टमः सर्गः ।

---

नवमः सर्गः ।

अथ क्ष्मां विक्रमसिंहभूपतेः प्रशासतः स्वर्गमिवापरेशितुः ।
दधौ जयन्तः स्वपितुश्चमत्कृतिं सदा नवश्रीपरिवर्द्धनक्रमैः ॥ १ ॥

सदोदयैस्तस्य विभूतिसंचयैः पचेलिमैः पुण्यतरोः फलैरिव।
उपायनीभावमुपागतैः स्वयं न कश्चमत्कारमपारमभ्यगात्॥ २ ॥
परेद्यु विद्योतितसर्वदिङ्मुखे कृतासनो रत्नमयासने नृपः।
जयन्तमुख्यैः परिवारितो जनैर्ददर्श कंचिद्गजराजमग्रतः॥ ३ ॥
समाययौ यस्य मिषेण जङ्गमः क्षमाभृतस्तस्य हिमाचलः किल।
समुन्नतिं द्रष्टुमिवातिकौतुकादनन्यसाधारणतामुपेयुषीम्॥ ४ ॥
यदीयकुम्भस्थलतल्पशायिनीस्रवन्मदाम्भस्तटिनीतटाश्रितैः।
मधुव्रतैः सान्द्ररुतैः कदाचिदप्यवापत स्वापसुखं समुद्रजा॥ ५ ॥
उदारजाम्बूनदभूरिभूषणैर्ज्वलन्मणिश्रेणिशिखाविभूषितैः।
क्षपा क्षणोल्लासि महौषधीरुचिं हिमाचलं गौरवपुर्जिगाय सः॥ ६ ॥
स्मरार्तकान्तानयनाञ्चलावली चलाचलेन श्रवणद्वयेन यः।
बभौ नभोलङ्घनलोलपक्षवानिवेन्द्रहस्तीन्द्रयुधे कृतोद्यमः॥ ७ ॥
विसारिसिन्दूरपरागपिञ्जरं समुन्नतं कुम्भतटं च धारयन्।
पिशङ्गश्रृङ्गस्य नवार्ककान्तिभिर्बिभर्ति यः पूर्वमहीभृतः श्रियम्॥ ८ ॥
(कुलकम्)

तदन्तरे श्रोत्रसुखैकपारणामिवादधद्भूमिपतेर्जनस्य च।
वचो वरादित्युदियाय दैवतं तवैष भावी खचरेश्वरः सुतः॥ ९ ॥
शुभोदयादस्य वशंवदात्मना मयार्पितोऽत्रैष चकास्तु कुञ्जरः।
उदन्वता श्रीकुचकुम्भलालिते हरेर्यथा वक्षसि कौस्तुभो मणिः॥१०॥
अयं गजः सिंहलपेशभूपतेरभङ्गुरैस्तैः सुकृतैः समाहृतः।
गृहाङ्गणं प्राप मम प्रभावतो गृहाण तं भो निगृहाण विद्विषः॥ ११ ॥
शशाम यावत्तदमानवं वचो महीपतिस्तावदिभेन्द्रमात्मना।
सुगन्धधूपप्रसवैरपूजयज्जयास्पदं चक्रमिवाशु चक्रभृत्॥ १२ ॥
वचोहरः सिंहलमेदिनीपतेरथागमद्विक्रमसिंहभूभुजः।
सभां प्रतीहारगिरा सुरेशितुः सभापि यस्याः समुपैति नोपमाम्॥१३॥
नृपं प्रणम्यैष कृतासनोऽवदत्पयोदगम्भीरगिरा वचोहरः।
त्वदन्तिकं प्राप मम प्रभोः करी सरोवराद्धंस इवापरं सरः॥ १४ ॥

समञ्जसं यज्जयकुञ्जरः स नस्तनोति नेत्राम्बुजकौतुकं तव ।
अवैमि तस्मिन्न च लोभसंभवं पयः प्रवेशे कतमा स्पृहाम्बुधेः ॥१५॥
सुहृत्त्वमाविष्कुरु सिंहलेश्वरे त्वमत्र तत्प्रेषणतो विशेषतः ।
विजृम्भितानिःस्पृहणीयतोद्भवं यशस्तवात्यद्भुतपुण्यजं हि ते ॥ १६ ॥
गजेन्द्ररत्ने गृहमागते स्वयं महीभुजः कस्य मनो न लुभ्यति ।
तथापि हेयः स बलीयसस्त्वया न सुन्दरः क्वाप्यसमानविग्रहः ॥ १७॥
विपत्तये वल्गति लोभसंभवः क्षमाभुजां दाव इव क्षमारुहाम् ।
प्रमादतस्तत्र कुतोऽपि स त्वया समुच्यतां नीतिवधूविलासिना ॥१८॥
रदप्रभाणां मिषतः प्रकाशयन्नृपोऽपि नैर्मल्यमिवात्मचेतसः ।
वचोभिरुन्निद्रमना ययानुगैर्वचोहरस्योत्तरयांबभूव सः ॥ १९ ॥
इमां यदस्मासु स सिंहलेश्वरः प्रभुस्तव स्नेहविशेषवर्मिताम् ।
उवाच वाचं तददर्शतामुना छटास्वसौजन्यमहोदधेरियम् ॥ २० ॥
ममाङ्गणालंकरणं करीश्वरः सहेलमागत्य बभूव यः स्वयम् ।
तथार्पितो देवतया प्रसन्नया स दीयते चेल्लघुता तदा न किम् ॥२१॥
सुहृद्धृतः प्रेषयितुं न युज्यते ममेभराजस्तव मेदिनीपतेः ।
न चेदिदं प्रेषयतां स संप्रति स्वकीयराज्यं सममृद्धिभिः सुहृत् ॥२२॥
नयागते वस्तुनि राज्यभूषणे समर्पिते दूतमुखेन कस्यचित् ।
रणाक्षमत्वप्रभवा हि भूभुजां भवेदकीर्तिर्न कथं प्रथीयसी ॥ २३ ॥
मुमोच यं दिव्यगजेश्वरं स्वयं भविष्णुसाम्राज्यवियोगसूचकम् ।
प्रभोऽस्तु वा पुण्यबलस्य तस्य का बलिष्ठतैवं कतमश्च विग्रहः ॥२४॥
प्रसेदुषी यस्य बभूव देवतार्पितद्विपेन्द्रा स बलीयसां धुरि ।
मदोद्धतः सूत्रजिघृक्षयान्धधीरयुक्तलोभः पतिरेव तावकः ॥ २५ ॥
जगाद दूतः पुनरात्मनायकप्रभुत्वशंसीति यथा धराधव ।
असंख्यहस्तीन्द्रवतोऽपि हस्तिनः परे ग्रहे ते कतमो ममाग्रहः ॥२६॥
मृगेक्षणानां सरसं समागमे स कण्ठकत्वं न तु राज्यसंपदः ।
भविष्यतीतस्तु वदन्त्युपायनात्प्रसेदुषः सिंहलभूभुजं गतः ॥ २७ ॥

न किंचिदूनं करिणामुना विना प्रभोर्मदीयस्य तथापि स द्रुतम् ।
गृहिष्यते तं हठ····(?) सुवाधियः श्रिया सहासह्यरुषां धुरंधरः ॥२८॥
नरेन्द्र बुध्यस्व धियात्मनोऽथवा महेन्द्रमन्त्रिप्रतिमस्य मन्त्रिणः ।
मम प्रभो प्रेषय कुञ्जराधिपं व्रजास्य कोपार्चिषि मा पतङ्गताम् ॥२९॥
तरङ्गितान्तःपृथुकोपपावकारुणेक्षणेन क्षितिपेन नोदितः ।
भ्रुवा जयन्तोऽथ वचस्विनां गुरुर्जगाद तं दूतमभूतसंभ्रमः ॥ ३० ॥
महानिधीनामधिपोऽपि चक्रभृन्नयागतं वस्तु न जातु मुञ्चति ।
मतङ्गजस्यास्य मिषात्स्वमन्दिरे रमा प्रविष्टा क्रियते कथं बहिः ॥३१॥
विभोर्ममाजौ विषमायुधाधिकप्रहारपात्रीकृतविग्रहस्तव ।
भविष्यतीशो नवसंगमे वधूजनो यथोत्कण्टककम्पसाध्वसः ॥ ३२ ॥
द्विषो न पोष्याः प्रणिपातमन्तरा निजैः पदार्थैरिति भूभृतां नयः ।
न जातु तेषां तमपश्यतां भवेज्जनाद्विशेषः फणिदुग्धपायिनः ॥ ३३ ॥
मदेन मत्तस्तव मेदिनीपतिर्दृढं ततोऽस्याजनि मन्दता धियः ।
गिरोऽप्यसभ्याः प्रचरन्ति ताः परं यतः कृतोत्साहपरंपराः परे ॥३४॥
मयि द्विपानर्पणसंभवाः क्रुधस्तवैव नाथस्य विनाशहेतवः ।
स्वतः प्रसूता निधनं धनंजयज्वलच्छिखाः किं न नयन्ति शाखिनम् ॥३५॥
न लभ्यते सद्मसमाश्रितः स्वयं महात्मनां नीतिरियं गरीयसी ।
पुरापि मैनाकमवाप वीक्षितुं न गोत्रभिद्वारिधिमध्यमाश्रितम् ॥ ३६ ॥
सुमेरुमाखोः खनितः खनित्रतां खरागदंष्ट्राशिखरैरुपागतैः ।
न दन्तभङ्गादपरं फलं यथा तथा द्विषामप्युपसर्पितामिह ॥ ३७ ॥
निशम्य निन्दामथ भर्तुरात्मनः परिस्फुरत्कोपभरारुणेक्षणः ।
जगाद दूतः क्षितिनाथनन्दनं प्रकम्पसंपक्कलितोत्तराधरः ॥ ३८ ॥
निपीड्य दोर्दण्डबलेन तत्प्रभुद्विपाधिराजं सह राज्यसंपदा ।
न यावदादास्यति तावदस्य ते प्रभोः प्रतीतिर्न भविष्यति ध्रुवम् ॥३९॥
द्विधापि बालोऽसि कुमार निश्चितस्त्वमज्ञतोद्गारगिरां प्रपञ्चतः ।
अगण्यदोषो विदुषां ततोऽधुना स्वमाननं मुद्रय मौनमुद्रया ॥ ४० ॥

गताग्रहस्त्वं जय कुञ्जरां पुरो विधाय सर्वस्वमुपायनीकुरु ।
प्रसादनायास्य जिजीविषुर्यदि प्रसेदुषो राज्यमितो लभस्व ॥ ४१ ॥
गिरा तदारुंतुदया तदार्दितः सूतः स दूतस्य जगाद भूपभूः ।
हरिः स कूपस्य परं यदीयया कुशिक्षया ते सजलातिशायवाक् ॥४२॥
मुधात्र किं ताण्डवडम्बरैर्गिरां मदीयभूभृद्बलवल्गु वल्गितम् ।
सितासिधाराम्बुनिमज्जितारयो निवेदयिष्यन्ति महाजिभूमयः ॥ ४३ ॥
हरेर्मदीशप्रहितास्त्रदुःसहे रणक्षणे दर्शनिशीव चन्द्रमाः ।
अवस्थितिं नो कलयापि लास्यतीत्यवेत्य तस्मै विनिवेदयद्द्रुतम् ॥ ४४ ॥
सदात्यया वह्निरिव क्रुधा ज्वलन्समेत्य नत्वा च हरिं नरेश्वरम् ।
मुखस्य विच्छायतयैव सूचयन्व्यजिज्ञपत्कार्यमसिद्धमात्मनः ॥ ४५ ॥
नृपाधिराज द्विपराजमञ्जसा न मुञ्चते हन्त कथंचनापि सः ।
फणीश्वरः स्फारफणामणिं क्वचिज्जहाति जीवन्न हि दर्पदुर्द्धरः ॥ ४६ ॥
रिपोः स्वरूपं विनिवेदयिष्यति स्फुटार्थमेतन्मयि मा रुषं कृथाः ।
महीभृतां सत्यगिरो हि सेवकाः प्रसादपात्रं पुरतो हितैषिणम् ॥ ४७ ॥
परत्र वीरे नरवीर का कथा न शङ्कते जातु पुरंदरादपि ।
प्रचण्डदोर्दण्डबलावलेपतस्तृणाय न त्वामपि मन्यते प्रभो ॥ ४८ ॥
न पुण्यलक्ष्मीजरसेव जर्जरा तवेश रक्षासु विचक्षणा ततः ।
गजेन्द्रवद्राज्यमिदं हरिष्यते तदीयपुण्यैः सुभटैरिवोद्भटैः ॥ ४९ ॥
निशम्य दूतादिति दुःश्रवं वचः प्रणष्टतत्त्वार्थविचारणः क्रुधा ।
समूलकाषं कषितुं स विद्विषं समुद्ययौ तार्क्ष्य इव क्षणात्खगः ॥ ५० ॥
विधेर्विबुध्य प्रतिकूलकारितां गजेन्द्रनाशप्रकटीकृतां ततः ।
स मन्त्रिभिर्नीतिपथैकजान्घिकैर्न्यचारि तेन द्विषतारिणं नृपः ॥ ५१ ॥
तथाप्यवज्ञाय तदीयमन्त्रितं प्रयाणमाधत्त मदोद्धतस्ततः ।
अरिष्टसंसूचितमृत्युरप्यसौ विलङ्घ्यते कैर्भवितव्यताथवा ॥ ५२ ॥

(अग्रे कुलकम्)

विलोलकर्णानिलवीचिशीतलैः सदाभिषिञ्चन्ति कराग्रशीकरैः ।
विमूर्च्छितान्यस्य भयेन दिग्गजान्स्वजातिवात्सल्यधियेव हस्तिनः ॥५३॥

नृपोऽसहिष्णुः परशूरमण्डलं जगत्सु शूरोऽयमितीव सर्वतः ।
यदीयतुङ्गस्तुरगाः खुरोद्धतैर्धरापरागैः स्थगयन्ति तत्पथि ॥ ५४ ॥
जलाशयान्निर्जलतामिवानयन्नगाधनीरैरतिनीरधीरपि ।
मुहुर्मुहुर्मज्जनपानगाहनैरनीकभूयिष्ठतया तदा पथि ॥ ५५ ॥
धराभुजङ्गश्चतुरङ्ग⋯⋯तरङ्गभङ्ग्येव तरङ्गिणीपतिः ।
असीमसामन्तमहर्द्धिडम्बरः प्रयाणभेरीरवपूरिताम्बरः ॥ ५६ ॥
स्वदेशसीमानममानमानभूः समाससाद क्रमशः स विक्रमः ।
हरिर्नरेशः सरभाङ्किताभिव क्षितिं द्विषद्दन्तिघटाविघट्टनः ॥ ५७ ॥
अथो **जयन्ती**श्वरचारपूरुषः समेत्य भूपं विधिना व्यजिज्ञपत् ।
विभो रिपुस्ते हरिरराययौ स्वयं स्वदेशसीमानमसीमसेनया ॥ ५८ ॥
रमाकुचस्पर्शसुखेन शायिनं मुकुन्दमप्यम्बुनिधौ विविप्रयन् ।
निदेशतो **विक्रमसिंहभूपतेः** प्रयाणभेरीध्वनितं ततोऽभवत् ॥ ५९ ॥
मयि स्थिते हन्त निदेशवर्तिनि स्वयं प्रयासः कतमः प्रभोरिति ।
समुत्सहिष्णुः समराय राजसूर्व्यजिज्ञपन्मन्त्रिमुखेन भूभुजम् ॥ ६० ॥
द्विषन्नरेन्द्रस्य हरेः पराजयो रणाङ्गणे यद्युवराजतोऽमुतः ।
तवैव तद्देव यशःप्रशस्तये त्वदीयमूर्त्यन्तरमूर्जितं हि सः ॥ ६१ ॥
प्रयातु तज्जेतुमनेकशक्तिभृज्जयी कुमारोऽभिनवस्त्वदाज्ञया ।
प्रभाकरस्यापि विभो भवेदिदं विभाकरः किं न तमस्ततिच्छिदे ॥६२॥
विमृश्य विज्ञप्तिमिति क्षितीश्वरः समञ्जसां चेतसि मन्त्रिसंविताम् ।
हरेर्विधातुं परितः पराजयं जयन्तमाज्ञापयति स्म सस्मयः ॥ ६३ ॥
उदात्तवीरव्रतनीतिभूषणं रणाय नम्रक्षितिपालमण्डलीम् ।
कृतप्रसादां सह गन्तुमादिशत्ततः कुमारेण जिगीषता द्विषः ॥ ६४ ॥
समूलमुन्मूलितवैरिपादपे हरीयितुं सिंहलराजकुञ्जरे ।
ततः कुमारः क्षितिभृन्निदेशतः समीहितार्थाय तदोपचक्रमे ॥ ६५ ॥
विशिष्टवेषाभरणैर्जगत्त्रयीं स कौतुकानन्दमयीमिवादधत् ।
पितुः प्रणम्यैष पदौ तदाशिषं जयश्रियः सिद्धिमिवाददे ततः ॥६६॥

शुभे मुहूर्ते जयकुञ्जराधिपं रणे जयं मूर्तमिवाधिरूढवान् ।
स चामरग्राहिकुरङ्गचक्षुषां बभौ कटाक्षैरिव चामरैः सितैः ॥ ६७ ॥

स विक्रमक्षोणिधवान्वयाम्बरप्रभाकरः प्रीणितबन्धुपङ्कजः ।
असीमतेजःशमितारिकौशिकस्ततः प्रतस्थे चतुरङ्गसेनया ॥ ६८ ॥

चमूचराणां तुमुलेन भूयसा चलंश्चकाशे क्षितिपालनन्दनः ।
युगान्तकालोच्छलितोरुयादसो गभीरधीरध्वनिनेव वारिधिः ॥ ६९ ॥

सुरनिकरकराब्जप्रेरिता पुष्पवृष्टिः
समजनि वसुधाया हर्षहास्यप्रभेव ।
तदनु मनुजवृन्दैः श्रूयमाणः सितास्यै-
र्दिवि निरवधिरुच्चैर्दुन्दुभीनां ध्वनिश्च ॥ ७० ॥

पृष्टे स्पर्शमिषात्क्षरन्निव सुधावायुर्ववौ पक्षिणां
श्रेणीष्वाख्यदिव प्रदक्षिणगतिः कल्याणमालारवैः ।
जज्ञे तत्र निमित्तमन्यदपि तत्साम्राज्यलक्ष्म्याः परी-
रम्भारम्भमिवास्य गोत्रतरणे विज्ञापयामास यत् ॥ ७१ ॥

तव स्फूर्जच्छौर्यप्रभवयशसा चन्द्रमहसा
भृशं शुभ्रीभूतं खकचनिचयं वीक्षितवती ।
पलिक्नीत्वभ्रान्त्या कुलितहृदयात्रौषधविधेः
शची पृच्छाक्लेशे निपतति मुहुः स्वर्गिभिषजोः ॥ ७२ ॥

..........................................

.......................................... ।

उपकृति(?)महिभर्तुर्भूमिभारं दधानो
गदमिव भुजदण्डे यः श्रीयुव(?)राजलक्ष्म्याः ॥ ७३ ॥

इति श्वेताम्बरश्रीमदभयदेवाचार्यविरचिते जयन्तविजयनाम्नि महाकाव्ये
श्रीशब्दाङ्के दूतोक्तिवर्णनो नाम नवमः सर्गः ।

---

## दशमः सर्गः ।

प्रयाणके तस्य ततः सहस्रैः संमर्दचारिध्वजिनीध्वजानाम् ।
उल्लोचलीला कलयांबभूवे दूरापनीतार्कमरीचितापैः ॥ १ ॥

तत्रैककालं परिवाद्यमानानिश्वान(?)वृन्दादुरितिर्निनादैः ।
क्षुभ्यत्समुद्रोर्मिजलेन सूर्यश्च········मत्कारमकारि शीतः ॥ २ ॥

इलां ततः पङ्किलतां नयद्भिर्मदप्रवाहैर्द्विरदैश्चलद्भिः ।
स निर्झरैर्जङ्गमतां प्रपन्नै रराज शैलैरिव सैन्यमस्य ॥ ३ ॥

हस्तीन्द्रहस्तोत्करसीकराणां गणैरदर्श्यस्त(?)नभस्तलेऽस्य ।
प्रयाणरेणुः स्थगिते खरांशौ समुद्गतानीव शुभान्यदु(मू)नि ॥ ४ ॥

एकोऽप्ययं वैरिनरेन्द्रपक्षक्षोदक्षमस्तन्मदवैभवं वचः ।
भूषैव भृङ्गाः करिणामितीव कपोलमूले कथयांबभूवुः ॥ ५ ॥

प्रोथावलग्नैः पृथुफेनपिण्डैर्वनायुदेश्यास्तुरगास्तदीयाः ।
ह्वेषारवैः पूरितभूरिसंख्यप्रयाणशङ्खा इव रेक्षु(णु)रुच्चैः ॥ ६ ॥

तुरङ्गमास्तस्य चतुःसमुद्रीं रजःसमाजैः स्थलतां नयन्ति ।
खुरोद्धतैर्दातुमिवावकाशमपारनासीरपरंपराणाम् ॥ ७ ॥

तदास्य तङ्गत्तुरगाङ्घ्रिपातप्रेङ्खोलितोच्छृङ्खलधूलिपुञ्जैः ।
मुखानि वैरिक्षितिपाङ्गनानां दिशां च बाढं मलिनीबभूवुः ॥ ८ ॥

तत्सैन्यधूलीपटली व्यधत्त व्योमान्तरे मामवनीमितीव ।
शेषः सितच्छत्रमिषादकार्षीन्मूर्त्यन्तराणीव विवोढुमेनाम् ॥ ९ ॥

मत्तोऽधिकं तच्छिबिरं ह्रियेति विस्तार्यपि व्योम तदा विलम्बम् ।
लीनं तदीयाश्वखुरोत्थधूलीपटीकुटीकोटरकोणकोटौ ॥ १० ॥

यदश्वधारालखुरक्षतायां····निम्नतायामवनौ स्खलन्तः ।
कृच्छ्रान्नेच्छात्पथि रथ्यवाहा भरेण भुग्ना इव संचरन्ति ॥ ११ ॥

रथैः पराभूतनिकेतपङ्क्तिर्मतङ्गजैर्न्यक्कृतकेलिशैला ।
प्रयाणके तस्य बभूव साक्षात्सेनैव सा जङ्गमराजधानी ॥ १२ ॥

विश्वंभराभारभराय भूयस्तथा स्वसैन्यैरभवत्कुमारः ।
फणैरशेषैरपि शेषराजो यथावनम्रैः कथमप्यधत्ताम् ॥ १३ ॥

तदीयसैन्यैः प्रविलोकिनीनां विद्याधरेन्द्रामरसुन्दरीणाम् ।
कुतूहलैः पिप्रियुरीक्षणानि रणः कणैर्व्योमनि चिक्लिशुश्च ॥ १४ ॥

स प्रावृडम्भोदमयी विमोरुमायूरपिच्छातपचारणोत्थैः ।
व्रजञ्शरन्मेघमयीमिव द्यां चक्रे च विस्तारितपुण्डरीकैः ॥ १५ ॥
दुग्धाम्बुधेरप्यधिकर्द्धिभाजां पङ्काकुलत्वेन जलाशयानाम् ।
विलुप्तया भूमिरुहां श्रिया च यस्य प्रयाणोज्झितभूरलक्षि ॥ १६ ॥
हरेरथारेः प्रविवेश देशं सिंहो द्विपस्येव वनप्रवेशम् ।
गजेन्द्रसैन्यैः स परःसहस्रैर्विन्ध्याटवीविभ्रममादधानैः ॥ १७ ॥
ररक्ष देशं स्वमिवाप्यशत्रोः क्षयं स तस्यैव यतश्चिकीर्षुः ।
स्वभाववैरान्नकुलो हि सर्पं निहन्ति नो तत्सदनं प्रविष्टः ॥ १८ ॥
दूतः कुमारप्रहितोऽथ गत्वा श्रीसिंहलेशं सहसा प्रणम्य ।
समुद्रनिर्घोषविशेषसख्या वाचा क्षुभ·····त्ससभं बभाषे ॥ १९ ॥
गजार्थिना दूतमुखेन रोषं निन्ये त्वया यः परुषैर्वचोभिः ।
तेनारि का·····कुचपत्रवल्ली विलोपसाटोपभुजप्रतापः ॥ २० ॥
दोर्दण्डकण्डूर्भवतोऽपनेतुमसौ कुमारः प्रहितो **जयन्तः** ।
कल्पान्तवातोद्धतनीरराशिनीरैरिवाशु स्वबलैरुपेतः ॥ २१ ॥ (युग्मम्)
प्रसाध्य देशान्सकलांस्तवोच्चैर्निजाज्ञयासौ निकषागमत्त्वाम् ।
द्वित्रैर्दिनैरेत्य रणाङ्गणे यत्करिष्यते द्रक्षसि तत्त्वमेव ॥ २२ ॥
अनिष्टवाक्यप्रथमावतारे जातेऽथ वर्णध्वनि[1] भूभृदूचे ।
वध्योऽसि नौ दूत इति प्रयाहि त्वामाश्रयत्वीशमिवार्धचन्द्रः ॥ २३ ॥
अथापमानादुपयातकोपः सद्यः स मत्वा स्फुरदोष्ठपृष्ठः ।
अजातपूर्वं तदरातिक्लृप्तं स्वस्वामिने विज्ञपयांबभूव ॥ २४ ॥
प्रयाणकं तत्क्षणमेव चक्रे श्रीराजसूनुः प्रतिशत्रुराजम् ।
सोऽप्याययौ संमुखमस्य को हि प्रारब्धवैरावलिरप्युदास्ते ॥ २५ ॥
आसन्नतां जग्मुषि सैन्ययुग्मे तत्रातिमात्रं प्रतिशब्दतीर्थम् ।
प्रातः समापूरितरोदसीकं सन्नाहभेरीध्वनितं बभूव ॥ २६ ॥
आसन्नसंग्रामसमुत्सहिष्णोर्वीरव्रजस्यानशिरे मनांसि ।
हर्षप्रकर्षैः समुदञ्चदुच्चरोमाञ्चचक्रैश्च चिरं वपूंषि ॥ २७ ॥

१. क्रियाविशेषणमेतत्.

प्रमोदसोच्छ्वासतया तदानीं स्फुटं स्फुटत्पूर्वरणव्रणौघैः ।
अखण्डवीरव्रतबाहुदण्डैः संनद्धुमारभ्यत वैरिवृन्दैः ॥ २८ ॥
रणोत्सवोत्साहसमुद्धविष्णुरोमाञ्चचञ्चत्कवचान्तरस्य ।
एकस्य कस्यापि महाभटस्य भाति स्म कृच्छ्रेण तनौ तनुत्रम् ॥ २९ ॥
वीरोऽपरं शौर्यधुरैकधुर्यस्तत्रापि सन्नाहकृताङ्गरक्षः ।
..............रितश्च सोऽभूद्ययौ न कस्यापि रिपोः कदापि ॥३०॥
स्ववल्लभायाः कमलायताक्ष्या व्यालोकनेच्छैः पुलकैर्भृतायाः ।
कस्यापि संमान्ति तनौ तनुत्रे क्षणं तिरोधाच्चतुरावधे सा ॥ ३१ ॥
सापत्न्यमप्यस्तु जयश्रिया मे नवीनया वल्लभया तवाद्य ।
प्रियाशिषं गद्गदया गिरेति श्रुत्वा ययौ कोऽपि रणेऽतिहर्षितः ॥३२॥
सामन्त.......मुद्विषतामसह्याः संनह्य संग्रामकलास्ववाह्याः ।
बलीयसा स्वस्वबलेन सार्धं कुमारपादान्तिकमीयिवान्सः ॥ ३३ ॥
संमानदानादिभिरेष तेषां हर्षप्रकर्षं प्रथयांबभूव ।
मन्थाद्रयस्ते ह्यरिसैन्यसिन्धुमन्थेन भर्तुर्विजयश्रिये स्युः ॥ ३४ ॥
कृताङ्गरक्षोऽपि स देवताभिरङ्गे कुमारः कवचं चकार ।
संग्राममुद्रेति ततः प्रपेदे प्रियामिवोच्चै रणकेलिदीक्षाम् ॥ ३५ ॥
सज्जीकृतं हस्तिपकाधिपेन पुरोधसा रोपितदिव्यशस्त्रम् ।
युधैकधीर्विक्रमसूर्गजेन्द्रमैरावणं शक्रमिवारुरोह[1] ॥ ३६ ॥
सामन्तसेनापतिमन्त्रिमित्रसगोत्रराजन्यगणैरुपेतः ।
महर्द्धिचञ्चच्चतुरङ्गसैन्यसकौतुकाक्षिप्तजगच्चचाल ॥ ३७ ॥
अलंकृतायामथ युद्धभूमावन्यूनसैन्येन नृपाङ्गजेन ।
सोऽप्याययौ **सिंहलभूमिपालः** कालेन कोपादिव कृष्यमाणः ॥ ३८ ॥
तदाग्रसैन्ये रणतूर्यनादैः सहाच्छलद्भिस्तुमलोल्बणास्यैः ।
शितास्त्रशस्त्रैर्ववृषेऽतिमात्रं वर्षाम्बुवाहैरिव वारिवारैः ॥ ३९ ॥
योधे प्रसिद्धैर्युयुधेरिसौ(रो)घैः सहाश्ववारैः सममश्ववारैः ।
रथिप्रवीरै रथिकैश्च सार्धं समानकक्षैर्जयबद्धलक्षैः ॥ ४० ॥

---

१. 'शक्र इवा' स्यात्.

विनश्वरैरप्यसुभिः स्वकीयैरनश्वरं जन्ययशोऽर्थयद्भिः ।
राजन्यकैस्तत्र चिरं ····· चक्रेऽहंपूर्विकापूर्वकमाजिकेलिः ॥ ४१ ॥
भटस्य कस्यापि बभौ शितासिभिन्नेभकुम्भोच्छलिता पतन्ती ।
मुक्तावली मूर्द्धनि पुष्पवृष्टिर्मुक्तेव देवैरवदानतोषात् ॥ ४२ ॥
नाराचबाणासिभुसण्डिभल्लीचक्रार्धचक्रप्रमुखास्त्रशस्त्रैः ।
भूमण्डली खण्डितवीरमुण्डमालाकुलालोहितपङ्किलाभूत् ॥ ४३ ॥
तुरङ्गमातङ्गघटाभटाङ्गव्यासङ्गिशस्त्रौघविदारणोत्थैः ।
रक्तस्रवन्ती निवहैर्वहद्भिर्दुःसंचरा क्वापि धरा बभूव ॥ ४४ ॥
कृते कथंचिन्नृपतेः सुतस्य पराङ्मुखे शत्रुभिरग्रसैन्ये ।
कल्लोलिनीजीवितवल्लभस्य तटाम्बुनीव प्रतिकूलवातैः ॥ ४५ ॥
मा कांदिशीकत्वमिहाश्रयध्वं यशश्चिनुध्वं निजपूर्वजानाम् ।
अदृष्टपूर्वं भवतां हि पृष्टं संख्येष्वपि ········ वैरिवीरैः ॥ ४६ ॥
इत्थं गिरोत्साह्य पुरः प्रवर्त्य रणाय राजन्यकमुद्धतास्त्रम् ।
सेनापतिः सिंहलसैनिकेषु श्येनः शकुन्तेष्विव निःपपात ॥ ४७ ॥

(विशेषकम्)

अश्वा न ते तत्र न चाश्ववारा न ते जगा(गजा) नापि गजाधिरूढाः ।
पदातयो नो रथिनो न रथ्या ये जर्जरा नास्य शरैर्बभूवुः ॥ ४८ ॥
छत्राणि चिच्छेद रणाग्रिमाणां तेजांसि साक्षादिव तीव्रबाणैः ।
ध्वजान्स कीर्तीरिव नर्तिकीर्तिः शिरांसि वंशानिव मूलतोऽपि ॥ ४९ ॥
कूलंकषाया इव वारिपूरैः कूलद्रुमाः क्षालितमूलजालाः ।
शरैस्तदीयैरदयैर्विपक्षी बभूवुरापातपदं च केचित् ॥ ५० ॥
द्रूणां फलानीव शिरांस्यरीणां शाखाः प्रशाखा इव बाहुदण्डान् ।
अङ्गान्युपाङ्गानि दलोपमानि चिच्छेद निस्त्रिंशतया शिरस्य(रांसि) ॥ ५१
कथावशेषे द्विषतामशेषे श्रीभीमसेनेन कृऽतेथ सैन्ये ।
श्रीसिंहलस्यापि सुषेणनाम्ना सेनाधिनाथः प्रससार योद्धुम् ॥ ५२ ॥
परस्परं तौ परुषैर्वचोभिराक्षेपयन्तौ निकटावभूताम् ।
ततः क्रुधान्धौ वनसैरभेन्द्राविवोन्मदौ चक्रतुराहवं च ॥ ५३ ॥

कथंचनानन्यमनाः सुखे(षे)ण प्रमद्वरं(?) तत्र स **भीमसेनः** ।
गाढप्रहारैर्विधुरीकृताङ्गं मूर्च्छामतुच्छां सुचिरं निनाय ॥ ५४ ॥
कोलाहलः सिंहलराजसैन्ये जितं जितं नः प्रभुणेत्युदस्थात् ।
मूर्च्छावसाने च स **भीमसेनो**ऽप्यथात्मसैन्यप्रमदेन सार्धम् ॥ ५५ ॥
रणे तदोत्साहमुवाह चेतः शौर्यं जयाकर्षि च बाहुदण्डः ।
श्री**भीमसेन**स्य तथा यथासौ स्वःसुन्दरीगेयगणो बभूव ॥ ५६ ॥
नीरन्ध्रबाणान्तरितान्तरिक्षं न्यक्कारनादैर्बधिरीकृताशम् ।
रणे तयोः स्फूर्जितमूर्जितं तद्बभूव वा गोचरमेति यत्र ॥ ५७ ॥
एतावुभावप्यनिवार्यवीर्यौ कृतश्रमौ द्वावपि चास्त्रशस्त्रौ ।
युद्धे सदृक्षावथ वीक्ष्य वीर जेतानयोः कः समशेरतेत्थम् ॥ ५८ ॥
रणश्रमेणातनुना सुखे(षे)णं महाज्वरेणेव विसंस्थुलाङ्गम् ।
बुद्ध्वा स चिक्षेप विभोः पुरस्तात्ततो हरेर्मूर्तमिव प्रतापम् ॥ ५९ ॥
ततो गृहीते निजसैन्यनाथे नाथः पृथिव्याः पृथुपार्थिवश्रीः ।
क्रोधादुदस्थात्क्षयकालकेलिं कर्तुं जयन्ते विशिखानलेन ॥ ६० ॥
कुर्वन्नसौ शोणितसान्द्रपङ्कं निःशङ्कमेवारिबलं बलेन ।
व्यालोडयामास तदातपेनोपतापितः पल्वलवल्लुलायाः ॥ ६१ ॥
असीमसंग्राममहार्णवेषु पारीणतां येऽपि ययुः प्रवीराः ।
कल्पान्तवातैरिव तस्य शस्त्रैर्विनिन्यिरे तेऽपि दिशां मुखेषु ॥ ६२ ॥
रणे प्रमोदामृतवीचिसेकादिव प्रसर्पत्पुलके प्ररोहः ।
अथो तदिष्ट(?)त्स्वयमुग्रशौर्यः श्रीमज्जयन्तो जयकुञ्जरेण ॥ ६३ ॥
रराज तत्र क्षतकुम्भिकुम्भस्थलीगलन्मौक्तिकचक्रवालम् ।
कुमारशौर्याद्भुतरञ्जिताया रणक्षमाया इव हास्यलास्यम् ॥ ६४ ॥
बाणैः कृपाणेन च तोमरैश्च क्षिप्रं गजेन्द्रस्य च वेगगत्या ।
अलक्षि लक्षैरिव बाहुदण्डैः स मण्डितः खण्डितवैरिमुण्डैः ॥ ६५ ॥
तं वीक्ष्य भूयिष्ठबलाश्वसेनं सहेलनिर्लोठनकौतुकोत्कम् ।
स्वस्यातिदूरत्वममस्तगाढं गुणाय सप्ताश्वरथाश्वराजः(?) ॥ ६६ ॥

प्रकामसंग्रामरसः स वैरिकुम्भीनकुम्भेषु कृतोपमर्दः ।
अरिश्रियामुच्चकुचस्थलानि श्रीमज्जयन्तः स्ववशान्यमंस्त ॥ ६७ ॥
सेनाजने नच्छ(श्व)रधोरणीभिः समन्ततो दृष्टिपथादतीते ।
एकाक्यभूत्सिंहलभूमिपालस्तारागणे चन्द्र इवार्कभाभिः ॥ ६८ ॥

दृष्टेर्गोचरचारिणि प्रहरति श्रीमज्जयन्ते हठा-
त्तत्रोच्चैर्जयकुञ्जरे च विजयव्यापारपारंगमे ।
उ········द्रुरुमत्सरो हरिरपि क्षिप्रं विपक्षक्षय-
···········काङ्क्ष्याशनिनिभां चिक्षेप बाणावलीम् ॥ ६९ ॥

छत्रं चिच्छेद तस्य प्रवररिपुजयश्रीविलासाशयासो(?)
कीर्त्या सार्धं चकर्त ध्वजमपि च सतां राजवंशावतंसम् ।
निर्जीवं चापमस्त्रैर्हरिवि····तपदं कुञ्जरेन्द्रं च चक्रे
तत्राश्चर्यं कवर्यं किमिव न विदधे वैक्रमिर्विक्रमेण ॥ ७० ॥

खड्गाखड्गिशराशरप्रभृतिभिर्युद्धप्रकारैर्युधं
कारंकारमपारकौतुकरसं विस्तारयन्तौ दृशाम् ।
प्रत्येकं विजयश्रिया रणगुणोत्कर्षापकर्षक्षणे
कं यामीति विमुग्धया प्रतिकलं तौ·······खिन्नया ॥ ७१ ॥

अथ क्लेशावेशप्रसरविरसं सिंहलपति-
र्जगादैवं वध्यस्त्वमसि मम नासेः शिशुरिति ।
सतां निस्त्रिंशोऽपि प्रभवति न हि भ्रूणहतये
प्रपद्याज्ञां तन्मे व्रज निजगृहं रन्तुमधुना ॥ ७२ ॥

एतैस्त्वं मदविह्वलोऽसि वचनैरुच्छृङ्खलैर्लक्षितः
स्फारैः शारदवारिदैरिव निरासारैरसारैर्भृशम् ।
निग्राह्योऽसि रणे मम प्रतिभटंमन्यः क्रुधेति ब्रुवं-
श्चिच्छेदास्य शिरःसरोजमसिना श्रीमज्जयन्तस्ततः ॥ ७३ ॥

स्थिरीकर्तुमिवाङ्केऽस्य हठात्कृष्टां जयश्रियम् ।
मन्त्रैर्जय जयेत्युच्चैः सुराः पुष्पाणि चिक्षिपुः ॥ ७४ ॥

स तस्य सप्ताङ्गसुसंगतां श्रियं जग्राह सार्धं यशसा यशोनिधिः ।
प्रभुः प्रपेदे च तदीयनन्दनैरुदेति यः कोऽपि स एव वन्द्यते ॥ ७९ ॥

इति श्वेताम्बरश्रीमदभयदेवाचार्यविरचिते महाकाव्ये श्रीशब्दाङ्के
हरिराजपराजयो नाम दशमः सर्गः ।

---

एकादशः सर्गः ।

अथ विक्रमभूभर्तुः पुत्रः प्राज्यपराक्रमः ।
प्रताप इव पिण्डस्थः प्रतस्थे दिग्जिगीषया ॥ १ ॥
श्रीजयन्तस्ततः पूर्वं पूर्वस्यामचलद्दिशि ।
चतुरङ्गचमूश्चक्रे चलयन्नचलामपि ॥ २ ॥
वल्गद्भिस्तुरगैस्तस्य द्विरदैर्मदवर्षिभिः ।
प्रापत्समन्ततः कम्पं तं च व्यस्तक्रमं मही ॥ ३ ॥
ततश्चीरखुरक्षुण्णक्ष्मापीठप्रभवैर्भृशम् ।
रजोभिरभवन्वन्ध्यावापारास्तरणेस्त्विषः ॥ ४ ॥
तस्मिंश्चलति भूपालमौलिलालितशासने ।
अहितानामवर्धन्त त्रासश्वासमहोर्मयः ॥ ५ ॥
तत्सैन्यपदसंमर्दनिर्दयोद्धूतरेणुभिः ।
भूभृतां मलिनान्यासंश्चक्राणि च शिरांसि च ॥ ६ ॥
सर्वस्वादानतः केचिन्मानभङ्गाच्च केचन ।
शरण्यं शरणीकृत्य मार्गभूपास्तमन्वयुः ॥ ७ ॥
स पूर्वपर्वतोत्सङ्गतरङ्गितमहोत्सवान् ।
विजिग्ये तरसा भूरि भिल्लानुल्लङ्घितक्रमः ॥ ८ ॥
ततः समुत्तरन्सुह्मानजिह्मितपराक्रमः ।
चकार चरणन्यस्तमस्तकानस्ततेजसः ॥ ९ ॥
नागानुपायनीकृत्य तमेवोर्जितविक्रमम् ।
सिषेवे खर्वितं जानन्गौडः शौण्डीर्यमात्मनः ॥ १० ॥
स वैरिकैरवरविर्दीप्यद्दोर्दण्डमण्डलः ।
प्रापत्तमालहिन्तालश्यामलं कूलमम्बुधेः ॥ ११ ॥

मुक्तासूत्रोर्मिभिर्मुक्ता हठेनार्त्तस्य शूलिना।
स शोकस्येव लक्ष्यन्ते बालेन्दोरश्रुबिन्दवः ॥ १२ ॥
मम राज्ञः कुलस्यापि वनश्रीरुपकण्ठजा।
भग्नामुनाबलेनाब्धिरितीव कलुषोऽजनि ॥ १३ ॥
उपस्थितोऽपि मशोषे पानाब्धेरस्य सैन्यतः(?)।
रक्षिका क्षारतैवेति तुष्टुस्तां तुष्टुवेऽम्बुधिः(?) ॥ १४ ॥
निवेश्य शिबिरं तत्र तीरे नीरेशतुस्ततः।
यशस्तोमैरिवात्मीयैर्डिण्डीरैरतिपाण्डुरे ॥ १५ ॥
उत्तुङ्गान्वङ्गभूपालकीलकानुच्चखान सः।
चखान च जयस्तम्भान्निर्दम्भभुजविक्रमः ॥ १६ ॥ (युग्मम्)
प्रतापतपनेनोच्चैः शोषयन्कपिशां नदीम्।
समत्कलकान्तानां कस्तूरीपत्रवल्लिभिः ॥ १७ ॥
सैन्यकोलाहलैर्दूरं पूरयन्रोदसीमथ।
चचाल नरशार्दूलः कलिङ्गाधिपतिं प्रति ॥ १८ ॥ (युग्मम्)
अखण्डैः खण्डितारातिभुजदर्पः प्रयाणकैः।
महेन्द्रविक्रमः प्राप महेन्द्राद्रेरुपत्यकाम् ॥ १९ ॥
तत्र निस्त्रिंशनिर्घातत्रुटत्कङ्कटसंकटम्।
निरन्तरशरासारसूत्रितोद्दामदुर्दिनम् ॥ २० ॥
परस्पराम्रसंघट्टस्फुरदग्निस्फुलिङ्गकम्।
कलिङ्गपतिना सार्धमभवद्युद्धमद्भुतम् ॥ २१ ॥ (युग्मम्)
विलोड्याथ क्षणेनैव विपक्षबलसागरम्।
कुमारः कैटभारातिरिवोद्दध्रे जयश्रियम् ॥ २२ ॥
तस्यावरोधनैः पुत्रभिक्षामभ्यर्थितस्ततः।
निवेश्य तत्सुतं राज्ये प्रतस्थे दक्षिणां दिशम् ॥ २३ ॥
निशम्य भूभुजङ्गं तमुपायान्तं रसादथ।
साध्वसध्यासिता प्राप दक्षिणा कम्पसंपदम् ॥ २४ ॥

संमुखापतितैस्तस्या दिशश्चाटुकरैरिव ।
लवङ्गवायुभिः शीतैः सिषेवे नृपनन्दनः ॥ २५ ॥
सहास्यामिव निर्मोकनिर्मलैः फेनिलैर्जलैः ।
शकुन्तकूजितैः पूर्वाभिभाषणपरामिव ॥ २६ ॥
शफरोद्वर्तनैर्मुक्तकटाक्षामिव सर्वतः ।
तरङ्गैरङ्गहारांश्च रभसा कुर्वतीमिव ॥ २७ ॥
शीकरैः पवनोद्धूतैः प्ररूढपुलकामिव ।
अथ रेवां स हेवाकमवलोकयति स्म सः ॥ २८ ॥
(त्रिभिर्विशेषकम्)

स तत्तीरतरुप्रान्तविश्रान्तैः किंनरीगणैः ।
कर्पूरगौरमाश्रौषीद्गीयमानं निजं यशः ॥ २९ ॥
तस्यास्तमालहिन्तालश्यामलास्तीरभूमयः ।
असेव्यन्त रतान्तेषु तत्सैन्यललनाजनैः ॥ ३० ॥
सा सिन्धुर्गाहनायातैस्तन्मत्तेभैररुच्यते ।
जग्मुः पयोनिधिः किंतु तेषां दानाम्बुनिम्नगाः ॥ ३१ ॥
विश्रम्य विविधैस्तत्र विनोदैर्भूरिवासरान् ।
प्रतापाग्रेसरः सोऽथ प्रतस्थे केरलान्प्रति ॥ ३२ ॥
बभौ बलभरस्तस्य तिरयन्दक्षिणां दिशम् ।
स्मरन्वैरिमिवागस्त्यं ग्रसितुं वार्धिरुद्यतः ॥ ३३ ॥
शरासने भजत्यस्य वक्रता शक्रतेजसः ।
केरलानां ललाटेभ्यः प्रोषिता भ्रुकुटिच्छटाः ॥ ३४ ॥
अहो तच्चापदण्डस्य नवीनः कोऽपि विक्रमः ।
दर्शयन्युधि यः पृष्ठं निष्ठान्नयति विद्विषः ॥ ३५ ॥
प्रतापतपनेनास्य केरलैराकुलीकृतैः ।
आत्मा निर्वापितः पादनखचन्द्रमरीचिभिः ॥ ३६ ॥
अथ स्मरशिशुक्रीडासाक्षिभिर्दक्षिणानिलैः ।
सूचितोऽनाध्वना भूपः प्रतस्थे मलयं प्रति ॥ ३७ ॥

निवेश्य भूभृतो भूभृत्कटके कटकं ततः ।
अध्यास्ताध्यासितान्भोगी भोगिभिश्चन्दनद्रुमान् ॥ ३८ ॥
एलापरिमलाढ्येषु श्रीखण्डद्रुमशालिषु ।
मलयाद्रिनिकुञ्जेषु सरोमरमणीसखः ॥ ३९ ॥
वातः संतापयेदस्मान्मापुने(?)र्विरहेष्विति ।
ददुर्दरीगृहद्वारि शिलाः सेनानतभ्रुवः ॥ ४० ॥
तद्दन्तिदन्तसंघट्टस्यन्दिभिश्चन्दनद्रुमैः ।
अजायत भटस्त्रीणामयत्नेनैव मण्डनम् ॥ ४१ ॥
वैक्रमिर्विक्रमेणाथ पार्वतीयान्विजित्य सः ।
तेभ्यः सारमिवास्याद्रेरुपायनमुपाददे ॥ ४२ ॥
अथ प्रस्थानभेरीणां प्रतिशब्दैर्दरीगतैः ।
शुभं शिलोच्चये तस्मिन्मुहूर्तमिव शंसति ॥ ४३ ॥
चमूचक्ररजःपुञ्जैः शोषयन्दक्षिणोदधिम् ।
**जयन्तः** पर्वतात्तस्माज्जेतुं पाण्ड्यांश्चचाल सः ॥४४॥ (युग्मम्)
यथा यथा करोत्येष पदं तद्देशसीमनि ।
तथा तथा विपक्षाणां श्यामिका मुखपङ्कजे ॥ ४५ ॥
तस्मिन्पाण्ड्यमहीभर्तुः समूलोन्मूलनोद्यते ।
भङ्गभीतेश्च तल्लक्ष्मीर्भेजेऽस्य भुजपञ्जरम् ॥ ४६ ॥
तरसा नरशार्दूलः पाण्ड्यानालोड्य दुर्मदान् ।
सांयुगीनत्वमनयदात्मनश्चरितार्थताम् ॥ ४७ ॥
लब्धैकच्छत्रसाम्राज्यपरच्छत्रेऽर्थयेव सः ।
भूभृतां तुङ्गवंशानां सर्वान्दण्डानखण्डयत् ॥ ४८ ॥
ततः सरोजवदनां चक्रवाकपृथुस्तनीम् ।
पृथुरोधोनितम्बां स ताम्रपर्णीमसेवत ॥ ४९ ॥
पयोदपरिरम्भोत्थस्वेदबिन्दुसहोदरैः ।
मौक्तिकैः सरितस्तस्याः स जग्राहोपदामिव ॥ ५० ॥

सहसा संमुखे तस्मिन्रागिणि क्षितिपाङ्गजे ।
तस्तकाञ्चीदिवैशाथ(?) चकम्पे द्राविडक्षितिः ॥ ५१ ॥
विजित्याटविकान्प्राप काञ्चीमञ्चितपौरुषः ।
निरुद्धविषयग्रामो वशीव परमं पदम् ॥ ५२ ॥
बभौ बलभरेणास्य परितः परिवेष्टितम् ।
काञ्ची····रवगाहेण लङ्केव जलराशिना ॥ ५३ ॥
अपश्यन्नथ काञ्चीशः शरणं कांचिदात्मनः ।
सर्वस्वमुपदीचक्रे स्वीचक्रे चास्य शासनम् ॥ ५४ ॥
अथ कर्णाटकान्तानां मदविभ्रमघस्मरैः ।
अपूर्यत प्रयाणेऽस्य रोदसीपटहस्वनैः ॥ ५५ ॥
पश्चादुड्डीनमेतस्य रजोभिः सैन्यसंभवैः ।
प्रत्यर्थिभूभृतां प्राणैः पूर्वमिथ्यावशादिव ॥ ५६ ॥
विपद्भिर्भूभृतस्तस्य न सेहे वाहिनीरयः ।
महोन्नतैरतिस्तब्धैरपि तालद्रुमैरिव ॥ ५७ ॥
विजित्य जगति प्राप्तवर्णः कर्णाटभूपतीन् ।
चकार चरणोपान्तविश्रान्तशिरसः कृणोत् ॥ ५८ ॥
निवेशितबलस्तत्र तीरे दक्षिणनीरधेः ।
अमन्यत गताशङ्कः स लङ्कामङ्कगामिव ॥ ५९ ॥
नभोनिर्झरिणीनीरनर्तिभिर्दुन्दुभिस्वनैः ।
कुर्वन्नुर्वीधरापातप्रतिभामम्भसांनिधेः ॥ ६० ॥
अहितानां हितानां च समं संतापसंमदः ।
तेजोभिश्च यशोभिश्च परितः परिवर्धयेत् ॥ ६१ ॥
सैन्धवीनां कपोलेषु लुम्पन्पत्रलताङ्कुरान् ।
रजोभिः सैन्यसंभूतैः प्रतस्थे पश्चिमामथ ॥ ६२ ॥
(त्रिभिर्विशेषकम्)

तस्य प्रस्थाननिस्वानध्वनिभिर्बधिरा इव ।
अशृण्वन्तः शुभोदर्कमपि वाक्यं विपश्चिताम् ॥ ६३ ॥

तत्सैन्यपांशुभिश्चान्धीभूता इव निरङ्कुशैः ।
अपश्यन्तः पुरस्तात्तं मृत्योर्द्वारमिवात्मनः ॥ ६४ ॥
बान्धवैरिव निर्बन्धादनिमित्तैर्धृता अपि ।
निपेतुस्तमभिक्षायाश्चा····(?)त्पारणरागिणः ॥ ६५ ॥
(त्रिभिर्विशेषकम्)
बलपाथोधिना सोऽथ निजेन नृपनन्दनः ।
आपतन्तीमरातीनां प्रतिजग्राह वाहिनीम् ॥ ६६ ॥
आततज्यधनुर्ध्वानैर्निस्वानानां च निस्वनैः ।
अभूद्वीरुभटश्रेणीस्ततः शस्त्रो(?)रणक्षमः ॥ ६७ ॥
सोमग्रहणशङ्काभूदातपत्रैः समस्तकैः ।
दिवापि दिवि दीप्यद्भिः शितशस्त्रसमुद्धृतैः ॥ ६८ ॥
गजेन्द्रात्क्षेपितैर्वीरैः स्वैरमाधोरणा बभुः ।
प्रीतये प्रेतनाथस्य प्रस्तुतोपायना इव ॥ ६९ ॥
परस्परास्त्रसंघट्टाद्रेक्षुरग्निस्फुलिङ्गकाः ।
वीरैर्विलोकनायेव कृता दीपा जयश्रियः ॥ ७० ॥
मत्तमातङ्गसंघातनिघातनसमुद्भवम् ।
बभूव क्षीबताहेतु क्षतजं जाङ्गलाशिनाम् ॥ ७१ ॥
अथ व्यथितमालोक्य सैन्यं धनुषि राजसूः ।
कृतान्तभ्रुकुटीभङ्गभीषणो दत्तवान्दृशम् ॥ ७२ ॥
तस्मिन्पर्जन्यवत्तत्र शरासारं विमुञ्चति ।
राजहंसैः समुड्डीनमुद्भूतं कीर्तिकन्दलैः ॥ ७३ ॥
भयंकरं भयस्यापि कृतान्तस्यापि कम्पकृत् ।
चकार वैक्रमिर्वैरिकुलान्तःकरणं रणम् ॥ ७४ ॥
अथारातिसमुद्दीप्ते तेजोऽग्नौ राजसूर्निजे ।
पुरोवर्तिना निःशङ्कमुपयेमे जयश्रियम् ॥ ७५ ॥
तस्मिन्सुरकरोन्मुक्ता प्रस्तनेप्रकरो(?) बभुः ।
कटाक्ष इव शौण्डीर्यसंतुष्टाया जयश्रियः ॥ ७६ ॥

इति निर्जित्य पाश्चात्यभूपतीनवनीपतिः ।
स्वविक्रमकथोद्घोषे चक्रे वैतालिकं न कम् ॥ ७७ ॥
अथ मानवतां मूर्ध्नि पदमुद्दामविक्रमा ।
कुर्वन्नुर्वीपतिर्भेजे धनदाधिष्ठितां दिशम् ॥ ७८ ॥
तस्मिन्नपूर्वमार्तण्डे कौबेरीं दिशमीयुषि ।
विद्विषां समवर्धन्त निशीथिन्यो दिनानि च ॥ ७९ ॥
दुर्निवारप्रतापोऽस्य प्रससार धरापतेः ।
हृदि विद्विषतां किंतु संतापः समवर्धत ॥ ८० ॥
तप्तं तत्तेजसात्यन्तं यशसा शीतलीकृतम् ।
स्नानपानक्रियायोग्यमभूद्वङ्क्षुनदीपयः ॥ ८१ ॥
संजाते संमुखे तस्मिन्दैवे च विपराङ्मुखे ।
मनो हूणनरेन्द्राणां दध्रे देशश्च शून्यताम् ॥ ८२ ॥
हूणाः सोढुमपर्याप्ताः सत्प्रतापं रणाङ्गणे ।
इतीव व्योमवाहिन्याः पयःपूरमशिश्रयन् ॥ ८३ ॥
दिशन्पराजयक्षोभमुत्तराशापतेरपि ।
हिमाद्रिमारुरोहाथ पृथ्वीनाथो जयोद्यतः ॥ ८४ ॥
तत्सैन्यभरमुद्वोढुमक्षमः क्ष्माभृतां पतिः ।
ररास कन्दरावक्त्रप्रतिशब्दैरितीव सः ॥ ८५ ॥
पुण्डरीकप्रभास्तस्य क्रीडन्तः सानुसीमनि ।
अलक्ष्यन्त गिरेरस्य गण्डशैला इव द्विपाः ॥ ८६ ॥
तदापातभयान्नक्तं निलीनाः कन्दरोदरे ।
असूयन्ति महौषध्ये ज्वलन्त्यस्तस्य वैरिणः ॥ ८७ ॥
विजिग्ये फलकव्यग्रपाणिभिः पादचारिभिः ।
गिरिशृङ्गगतानश्मवर्षिणः सक्षणा द्विषः ॥ ८८ ॥
प्रणतिलुलितमौलयः पुरस्ताद्द्रुततरमेत्य वनेचराः कुमारम् ।
विविधमणिसुवर्णरत्नदानैः शिरसि कृताञ्जलयोऽथ भेजिरे ते ॥ ८९ ॥

ततः समुत्तीर्य गिरेरनुद्रुतो वनेचरैर्विश्ववशंवदः पदम् ।
बबन्ध कालागुरुगन्धबन्धुरे स कामरूपामधिदेशसीमनि ॥ ९० ॥

विश्वंभराविजयजाग्रदुदग्रवीर्यं
तं कामरूपनृपतिः स्वपुरं प्रवेश्य ।
तैस्तैरुपायनशतैरभिनन्द्य पूर्व-
मुर्वीपतिं तदनु शासनमाददेऽस्य ॥ ९१ ॥

इत्थं पृथ्वीवलयमखिलं पादमूले स कृत्वा
कीर्तिस्तम्भस्तबकितपयोराशिवेलावनान्तः ।
कुर्वन्नुर्वीपरिवृढशिरःशेखरम्लानिमुद्य-
त्तेजःपुञ्जैः स्वनगरमथ श्रीजयन्तः प्रतस्थे ॥ ९२ ॥

इति श्वेताम्बरश्रीमदभयदेवाचार्यविरचिते जयन्तविजयनाम्नि महाकाव्ये श्रीशब्दाङ्के दिग्विजयो नामैकादशः सर्गः ।

---

द्वादशः सर्गः ।

अथ धरणिधवः पतिर्जयन्त्या निजतनयस्य समस्तदिग्जयेन ।
श्रवणपथगतेन सप्रमोदस्तबकभराञ्चितमानसो बभूव ॥ १ ॥
बहुविधरसभङ्गिसङ्गि लास्यं निजपुरि वर्धनकं व्यधापयत्सः ।
रिपुविजयमनु क्षितीश्वराणां भवति पुरीषु न का महोत्सवश्रीः ॥ २ ॥
कतिपयदिवसव्यतिक्रमेऽस्य श्रवसि विवेश वचो यथात्मसैन्यात् ।
नृप तव तु जयं जहार कश्चिन्निधिमिव भूमितलाददृष्टरूपः ॥ ३ ॥
समजनि पितुराकुलं त्वमन्तस्तदशुभसंभवशङ्कया सुतस्य ।
प्रथयति हि तनुत्वमम्बुराशेरविरवियोगदिशापि शीतरश्मेः ॥ ४ ॥
उदितसुतवियोगदुःखभारप्य(?)वनितौ शुभशंसिभिर्निमित्तैः ।
किमपि मनसि निर्वृतिं विधाय स्थितवति धैर्यमहानिधावितश्च(?)॥५॥
शिखरकखितशीतराशिबिम्बस्रवदमृतस्नपनैरिवातिशुभ्रे ।
क्षितियुवतिशिरोवतंसकाल्यरजतगिरौ खचराधिवासधाम्नि ॥ ६ ॥
तदुपरि धरणीविचित्ररोचिर्मणिमुकुटोत्कटडम्बरं समृद्ध्या ।
सुरपुरविजयाय जागरूकं गगनविलासपुरं पुरं समस्ति ॥ ७ ॥

रिपुधरणिभुजां भुजावलेपप्रसरतमिस्रसरोजिनीभुजङ्गः ।
प्रसमरजिनशासनोन्नतिर्यः पवनगतिर्नृपतिः स तत्रशास्ति ॥ ८ ॥
त्रिभुवनविजयाय मीनकेतोर्निरुपममेकमिवास्त्रमस्य राज्ञी ।
समजनि जगदर्थ्यरूपलक्ष्मीर्जिनमतपुण्यमयीव **चित्रलेखा** ॥ ९ ॥
रतिरमणनृपान्तरङ्गसेना निरवधिरूपवतीषु लब्धरेखा ।
समजनि तनया क्रमेण तस्याः **कनकवती** कनकाभिगम्यकान्तिः॥१०
सरसमथ सुपुत्रजन्मनीव क्षितिभृदकारयतोत्सवं तथास्याः ।
असुभगमिह जन्म कन्यकानामजनि यथैष वृथा प्रवादपङ्कः ॥ ११ ॥
क्षितिपतिकुलकन्यकोचिताभिः सकलकलाभिरलंकृता क्रमेण ।
अवनिपतिसमा सुवर्ण्यरूपप्रमुखगुणा सुखमेधते स तन्वी ॥ १२ ॥
इयमतिशयसौरभाभिरामे कमल इवालिवधूर्जिनेन्द्रधर्मे ।
निरवधिमधुनेव सिद्धिलक्ष्मीः सततसुखेन मनोहरेऽभिरामे ॥ १३ ॥
कुसुमशरसुधारसायनं सा युवजननेत्रचकोरचन्द्रिकाभः ।
प्रसृमरगुणचित्रचित्रसौधं सकलविलासमयं वयः प्रपेदे ॥ १४ ॥
शुभकुल····रूपशौर्यराज्यैर्नृपतिशतैः सविता सुतामयाचि ।
नलिनगुणतया स तानमुञ्चत्सदृशगुणैर्हि समागमो गुणाय ॥ १५ ॥
निजतनयकृते नभश्चरेन्द्रः पवनगतिं प्रणयादयाचतैनाम् ।
अभिलषति वरं न देव कंचिन्मम तनयेत्यथ तेन स न्यषेधि ॥ १६ ॥
तदसुखभरसंक्रमार्तचित्तः क्षितिपतिरौपयिकं विचिन्त्य तत्र ।
अभिमतफलकल्पशाखिशाखा जिनविभुशासनदेवता जयार्च्या ॥१७॥
अवददिति निजाशयं सुतायास्तदनु च योजितपाणिपल्लवा सा ।
स्वजनकवचनं प्रपद्य शेषामिव समुपाक्रमत····क्रमेण ॥१८॥ (युग्मम्)
द्युतिमति सदने कृतासनेयं शुचिवपुरात्तपवित्रशुभ्रवस्त्रा ।
अकृत जिनपदार्चनं प्रमोदाद्यदिदमशेषशुभान्तरायहारि ॥ १९ ॥
मृगमदघनसारकुङ्कुमाद्यैः प्रसृमरसौरभवासितान्तरिक्षैः ।
सुरतरुसुमनःस्रजां समाजैर्मधुपवधूमधुपानकेलिपात्रैः ॥ २० ॥

प्रसृमरदगुरुधूपधूम्रधूमैर्नभसि घनभ्रमतः स केकिकेकैः ।
अकृत सुकृतिनीष्टदेवतार्चामधिकलभक्तिभरादिवावनम्रा ॥ २१ ॥
(युग्मम्)

तदनु कृशतनुस्तपोविशेषादधिगतदेवतयैक्यमावहन्ती ।
क्षणमिव दिवसान्निनाय यत्नादभिमतयोगसुखाय योगिनीव ॥ २२ ॥
सुरभिपवनमिश्रपुष्पवृष्टिः समजनि सप्तमवासरेऽथ तत्र ।
रुचिविजिततडिल्लता पुरस्तान्न्यगददिदं समुपेत्य देवता सा ॥ २३ ॥
अयि नृपतनये तवेतिभक्तेरिह जिनशासनदेवताहमागाम् ।
फलतु वरमनोरथस्तवायं तरुरिव दोहदतः प्रसादतो मे ॥ २४ ॥
चतुरुदधिपयःपवित्रसीमक्षितिवलयैकविलासिना वरेण ।
भव रजतगिरिप्रसिद्धविद्याधरनृपवन्द्यपदा **जयन्त**नाम्ना ॥ २५ ॥
मम वचनमिदं निवेद्य सद्यो जनयितुरिष्टवरस्य संगमाय ।
व्रज निजपरिवारवर्धितश्रीर्जिनसदनोपवनेऽपनीतखेदे ॥ २६ ॥
इदमुदितवती तयार्चितासौ सपदि तिरोभवदादृता तदुक्तम् ।
उषसि शशिमुखी तथैव चक्रे हितवचने हि रताः शुभं लभन्ते ॥२७॥
सकलनृपतिचक्रमेकहेलं स्फुरदनुभाववशंवदं विधाय ।
निजनगरमभिप्रयान्तमेषा झटिति जयाथ **जयन्त**माजहार ॥ २८ ॥
प्रकटितहृदयानुकूलभावं मुखमवलोक्य विकस्वरं स तस्याः ।
पदकमलयुगं त(न)नाम देव्या विनयगुणाञ्चितमानसा हि सन्तः २९
अथ निजजननीव सा बभाषे नृपतनयाहमिहानयं नगे त्वाम् ।
तव गगनचरेषु चक्रिलक्ष्मीप्रभवगुणा नृपकन्यकां प्रदित्सुः ॥ ३० ॥
ध्वजपटमिषतो वरेण्यपुण्यप्रभवगुणा तयेव(?) जगत्सु दक्षपात्रे ।
इह सुरसदने जिनेन्द्रबिम्बं ····नयनामृतसारणिं स्वनेत्रे ॥ ३१ ॥
वियदिव परिमातुमुच्छ्रितानां विकसितपुष्पमिषेण पादपानाम् ।
घनमुपहसतीव नन्दनाह्वं वनमपि यन्निजवैभवोदयेन ॥ ३२ ॥
सरसफलभरावनम्रशाखद्रुमशिखरैः पवनेन यन्नमद्भिः ।
प्रणमदिव जिनं शिरोभिरस्यालयमतुलं परिवृत्य तिष्ठति स्म ॥ ३३ ॥

सुरगगनचरेन्द्रसुन्दरीभिः सितनयनाञ्जलिभिः प्रपीयमानः ।
तदिदमुपवनं स्वलीलयालंकुरु भविता च तयेह संगमस्ते ॥ ३४ ॥
समयसमुचिते कृतेऽथ कृत्ये मितपरिवारविभूषितस्तयासौ ।
हितजनवचनं बुधैर्विधेयं ध्रुवमिति जैनगृहे जगाम हृष्टः ॥ ३५ ॥
अहमहमिकया जिनेन्द्रबिम्बं खचरनृपैर्विहितोत्सवं स तत्र ।
सरभसमवलोकयांबभूव ध्रुवशिवसौख्यतरोरवन्ध्यबीजम् ॥ ३६ ॥
निरवधिमकरन्दबिन्दुवृन्दैः सततवशंवदषट्पदैः प्रसूनैः ।
मुखकमलनिलीनलोचनोऽसौ सरभसमर्चयति स····स्कुमारः ॥ ३७ ॥
विपुलपुलकमांसलः सदेवं प्रणयवशीकृतमानसः प्रणम्य ।
शुचिरुचिपटलीजटालमुच्चैर्मणिमयमण्डपमासदत्तदग्रे ॥ ३८ ॥
जनकुमुदततेः कुमुद्वतीनां पतिरिव यः परितश्चकास्ति तत्र ।
घनसमय इवोपशान्तिवल्लेः कुमतकरीन्द्रघटासु केसरीव ॥ ३९ ॥
फलमिव परिपाकि दाडिमीनां चिरपरिचुम्बितनिष्कषायभावम् ।
सततमपि मनो यदीयमास्ते·····नमिव सत्करुणोदयैश्च हृद्याम् ॥ ४० ॥
विषयविषविषङ्गवैशसस्य(?) स्फुरति लवोऽपि न यस्य मानसान्तः ।
प्रतिकलमिह खेलति स्म यस्मात्प्रसृमरशान्तरसामृतप्रवाहः ॥ ४१ ॥
समतृणमणिलोष्ठकाञ्चनस्य त्रिकरणशुद्धिवधूधवस्य यस्य ।
क्रमकमलनमस्ययापि जन्तोस्त्यजति सुदुस्तरतामदं भवाब्धिः ॥ ४२ ॥
सुरगिरिवयसस्तटैः स रत्नैस्तरुरिव सौरभशालिभिः प्रसूनैः ।
शिवपथपथिकैकसार्थवाहः प्रथितयशाः स्खलितस्मरप्रतापः ॥ ४३ ॥
दशविधमदधद्यतीन्द्रकृत्यं गुणमिव यः सुकवेर्महाप्रबन्धः ।
अवितुमिव जगन्ति मोहशत्रोरधिगुणधर्मधरः समन्ततोऽपि ॥ ४४ ॥
भविकशिवपुरीप्रवेशतूर्यध्वनिमधुरैर्वचनैर्जिनेन्द्रधर्मम् ।
खचरसुरजनस्य कीर्तयन्तं स तमवलोक्य ननाम धर्मसूरिम् ॥ ४५ ॥
(अष्टभिः कुलकम्)

गुरुरपि नृपजं स धर्मलाभप्रवितरणेन मुदास्पदं चकार ।
सुरभयति न कं शिरोवतंसीकृतमभितः सितपारिजातपुष्पम् ॥ ४६ ॥

श्रृणु सगुण **जयन्त** जैनधर्मं सकलसुखोपयिकं भवद्वयेऽपि ।
इति गुरुवचने स बद्धतृष्णः समजनि चातकवत्पयोदनीरैः ॥ ४७ ॥
सपदि शिवपदाय वीतरागं परममवेहि जिनेन्द्रमेव देवम् ।
किमपि मृगदृशां कटाक्षपातैः शिरसि कृतस्मरशासनैः किमन्यैः ॥४८॥
घनसमयपयोदगर्जिनादैः स्फुटसुमनस्त्वमुपैति केतकीव ।
द्रुतमपि जनता यदीयवाक्यैर्भज सुगुरुं तमपास्तसर्वसङ्गम् ॥ ४९ ॥
परिहर परिहार्यमार्य वीर्यैः कुपथमपथ्यमिवातुरः सकर्णः ।
इतरजनसमानतैव यस्मिन्विषयजुषां खलु देवता गुरूणाम् ॥ ५० ॥
विषयसुखमशेषदेहभाजां मुखमधुरं परिणामदारुणं च ।
इति विदुरधियामपीह शक्तिर्विलसति मोहमहीन्द्रशासनं हि ॥ ५१ ॥
तरुणतनुमतां वराङ्गनेव क्षितिपतनूज दया यदि प्रिया ये(ते) ।
द्रुतमनुभविता तदा ह्यनङ्गव्यतिकररम्यतमां दशां सदैव ॥ ५२ ॥
मुखकमलमलंकरोति सत्य.................................. ।
........................................................................ ॥ ५३ ॥
जनितयुवपतङ्गदेहदाहं ज्वलितगुणं च शिखायमानरूपम् ।
परयुवतिवपुः प्रदीपकल्पं भवति सदा यतधीर्न जातु जन्तुः ॥ ५४ ॥
विविधविभवभोगभूरितृष्णा ज्वरलहरीव भवावधिप्ररूढा ।
जनयति हृदि तापमित्यमन्दं प्रशमय निस्पृहतासुधारसैस्ताम् ॥ ५५ ॥
बलमिव परितश्चतुःप्रकारं जिनगदितं कुरु दानमुख्यधर्मम् ।
नरसुरशिवसंपदां पदं त्वं सपदि चिकीर्षसि चित्प्रियं प्रियाणाम् ॥५६॥
सकलसुकृतकल्पपादपानां दवदहनप्रसरोपमं समन्तात् ।
नय चतुरशमं कषायवर्षं प्रशमरसेन सुधासधर्मणा त्वम् ॥ ५७ ॥

संवेगामृतपूरसुन्दरसुरस्रोतस्विनीस्रोतसि
स्नातुं हन्त नदीष्णु(?)तां व्रज रजःसंभारसर्वंकषे ।
अर्हन्निर्मलधर्म....विधिनाश्रृङ्गारसारेण च
स्वं श्रृङ्गारय यत्प्रभावसुभगं त्वामेति सिद्धिः स्वयम् ॥ ५८ ॥

संजातायां तदनु सुगुरोर्देशनायां जयन्तः
शुद्धः श्रद्धाकवचितमनाः स्वाञ्चितं धर्मकर्मा ।
प्राप्याक्षीणं निधिमिव मुदा मेदुरः सादरोऽयं
जज्ञेऽनन्याभ्युदयसुभगं भावुकश्रीविलासः ॥ ५९ ॥

इति श्वेताम्बरश्रीमदभयदेवाचार्यविरचिते जयन्तविजयनाम्नि महाकाव्ये श्रीशब्दाङ्के कुमारधर्मप्रतिपत्तिवर्णनो नाम द्वादशः सर्गः ।

---

## त्रयोदशः सर्गः ।

अञ्जलिं शिरसि बिभ्रदद्भ्रव्यक्तभक्तिरसकुम्भमिवोच्चैः ।
श्रीमुनीन्द्रमथ पार्थिवसूनुस्तं प्रणम्य च चचाल यथेष्टम् ॥ १ ॥
तस्य जैनसदनस्य विनिर्यच्चन्द्रकान्तिमणिकान्तिपयोभिः ।
नित्यमुक्षितमिवालिकुलाभं कौतुकादुपवनं स विवेश ॥ २ ॥
यत्र यत्र स चचार वधूभिस्तत्र तत्र सुभगः परिवव्रे ।
श्रीयते हि मधुसौरभसारं पारिजातकुसुमं भ्रमरीभिः ॥ ३ ॥
तद्वपुर्लवणिमामृतपूरैः सूत्रलोलनयनाभिरपाङ्गैः ।
पीयते स्म कुसुमायुधजन्यस्मेरतापमपहर्तुमिवाशु ॥ ४ ॥
लोचनैरिव विकस्वरपुष्पैः पल्लवैः करतलैरिव शोणैः ।
उत्कुचैरिव फलैर्वनलक्ष्म्यास्तत्र विस्मयमतीव सा भजे ॥ ५ ॥
यामिनीचरमयामचिरामे चक्रवाक इव संभृतरागः ।
स प्रियां नृपतिवंशपताकां तां तदेक्षितुमभूदनिमेषः ॥ ६ ॥
देवतावचनतो नृपपुत्री मीनकेतननिकेतनमेकम् ।
साप्यथोपवनमुत्सुकचित्ता संचचार सुकुमारशरीरा ॥ ७ ॥
मार्गसत्वरगमश्रमजातस्वेदबिन्दुभरदन्तुरिताङ्गी ।
अन्तरुल्लसितरागपयोधेर्मौक्तिकैरिव बभौ निचिता सा ॥ ८ ॥
यूथविच्युतमृगीव विलोलक्षिप्तचक्षुरखिलास्वपि चक्षुः ।
तस्य दर्शनकृतेऽत्र वने सा क्वापि केलिनिलये·········सा ॥ ९ ॥

आस्यसौरभमिलन्मधुपालिध्वानमांसललितनूपुरनादैः।
तत्र कांचन विभाव्य मृगाक्षीं सोऽपि कौतुकवशेन विवेश ॥ १० ॥
तां तडिद्द्युतिविजित्वरकान्तिं रूपतर्पितजगत्त्रयनेत्राम्।
वीक्ष्य विस्मयतरङ्गितचेताः स व्यचिन्तयदिदं युवराजः ॥ ११ ॥
पर्वते किमिह पर्वतपुत्री पर्वतश्रियमवेक्षितुमागात्।
किं रतिः किमु रमा खलु नैव मर्त्यलोकललनैव निमेषात् ॥ १२ ॥
पादपङ्कजतले खलु रागः पद्मरागरुचिरः प्रथितेऽस्याः।
निर्ममे मम मनोद्रुमरागं सांप्रतं कृतपदेयमतीव ॥ १३ ॥
लाक्षया विहितरागतरङ्गैः साङ्कुरैः स्मरतरोरिव बीजैः।
पादपङ्कजनखैः समयूखैः शोभते रजनिजानिमुखीयम् ॥ १४ ॥
विद्रुमद्रुममरीचिसगोत्रैः पादयोर्नखमयूखशिखाग्रैः।
एतदङ्गलतिका स्मरभूभृद्दोःप्रतापपटलीव विभाति ॥ १५ ॥
एतदङ्घ्रिसुभगाकृतिलक्ष्मीलाभलम्पटतयेव सदापि।
क्षोणिभारवहनव्रतचर्यासेवनैव रसिकोऽजनि कूर्मः ॥ १६ ॥
सुभ्रुवः क्रमपरिक्रमणेऽस्या जात्यहेममणिनूपुरनादैः।
बोभवीति मकरध्वजभूभृन्निद्रया सततमेव दरिद्रः ॥ १७ ॥
हारिणीं क्रमगतिं हरिणाक्ष्याः शिक्षितुं सुचिरमभ्यसनेऽपि।
केलिहंसललना न शशाक स्वल्पधीः खलु जलाशययोगात् ॥ १८ ॥
रामणीयकमनङ्कुशमस्या जङ्घयोरनघयोरवलोक्य।
नूनमुद्गतपराभवदुःखा सस्मुरेणललना वनवासम् ॥ १९ ॥
एतदूरुमिषतः पृथुरम्भास्तम्भयुग्ममिव यौवनलक्ष्म्याः।
उद्धृतः प्रविशतः पुरमध्ये मन्मथक्षितिपतेः प्रतिभाति ॥ २० ॥
दीपदीप्तमणिकाञ्चनकाञ्ची किङ्किणीक्वणमिषान्नृपपुत्र्याः।
यौवनोन्मदकरीन्द्रपुरस्ताड्डिण्डिमारव इव प्रतिभाति ॥ २१ ॥
उल्लमल्लवणिमामृतवीच्या नाभिमण्डलगभीरसरस्याः।
रोमराजिरुपकण्ठजदूर्वा प्रातिभं वहति चारुदृशोऽस्याः ॥ २२ ॥

उन्नतिः कठिनयोः कुचयोर्यत्स्थानमप्युपरि मे मृदुनोऽस्याः ।
तत्सुदुःसहमतीव बभूव क्लेशवश्यमुदरं कृशमस्याः ॥ २३ ॥
भारितं गुरुभरेण कुचाभ्यां विस्तृतेन जघनेन च रुद्धम् ।
इत्यसह्यतमवेदनयेव प्राप्तमेतदुदरं ननु कार्श्यम् ॥ २४ ॥
एतदुच्चकुचसद्मनि निश्रेणीव भाति ललिता त्रिवलीयम् ।
गच्छतो रतिपतेरवलम्बस्तारहारलतिकोभयतोऽत्र ॥ २५ ॥
कण्ठसौष्ठवगुणैर्गमितोऽयं कम्बुरम्बुजदृशा परिभूतिम् ।
नूनमन्तरधुनापि दधात्यावर्तरूपमतिदुःखमितीव ॥ २६ ॥
सुभ्रुवो मदनकेलिगुरुत्वं प्राप्तवत्यतितरां कुचयुग्मे ।
निर्भराम्बुभरविभ्रममेति स्फारहारलतिकोभयतोऽस्याः ॥ २७ ॥
केतकीदलदृशः स्तनपीठे सूत्रयत्यधरपल्लवकान्तिः ।
अप्रयत्नभवकुङ्कुमरागश्रीविलासमनुवेलममुष्याः ॥ २८ ॥
एतदीयसरलोन्नतनासा वंशपार्श्वगतलोचनयुग्मम् ।
एकनालकमलद्वयशोभा वैभवं दधदिव प्रतिभाति ॥ २९ ॥
लङ्घितुं श्रवणयोश्चिरसीमां लोचने मृगदृशो विवदाते ।
निर्विवादविषयेऽपि विवादः शश्वदश्रुतिमतां किमु चित्रम् ॥ ३० ॥
नित्यभूषणजुषः श्रुतियुग्मस्योपमास्तु किमु मौक्तिकशुक्त्या ।
या विदार्य परिमुञ्चति मुक्तामण्डनं निजमखण्डमरीचि ॥ ३१ ॥
अग्नितापघटनैर्घटदुःखं यच्च रत्नखचनाद्युपसोढुम् ।
तत्कपोलतलचुम्बनतोऽस्याः कुण्डलद्वयममन्यत सौख्यम् ॥ ३२ ॥
अष्टमीशशिनिभेऽधिकनीलं भ्रूयुगं लसति भालतलेऽस्याः ।
वल्लरीद्वयमिवास्यसरस्याः संभृतं लवणिमामृतपूरैः ॥ ३३ ॥
तारकावलयवैभवभाजा व्योमपार्वणहिमद्युतिनेव ।
कान्तिमौक्तिकवृतेन नताङ्ग्याः शोभतेऽलिकतलं तिलकेन ॥ ३४ ॥
कुन्तलैरलिकुलैरिव नीलैः केसरैरिव रदद्युतिपूरैः ।
कण्ठनालपरिवर्धितशोभं शोभते वदनवारिजमस्याः ॥ ३५ ॥

आहृतेन जगतामपि लावण्यामृतेन ससृजे वपुरस्याः ।
वेधसा युवतिसृष्टिकलायां स्वस्य कौशलधरामिव मातुम् ॥ ३६ ॥
स्त्रैणसृष्टिनिपुणेन विधात्रासर्जि नूनमियमेव मृगाक्षी ।
श्रोत्रनेत्रपथमेति यदन्या नेदृशी क्वचन काचन तन्वी ॥ ३७ ॥
रूपगर्वमयतां स्मरकान्ता पार्वती सुभगतामदमेतु ।
स्त्रैणसर्वगुणगौरवपात्रं किं त्वियं परमिति प्रतिभा मे ॥ ३८ ॥
खेचरेन्द्रदुहितापि कुमारं रूपसंपदपहस्तितमारम् ।
वीक्ष्य तत्क्षणमभूदनुरागक्षीरसागरतरङ्गनिमग्ना ॥ ३९ ॥
प्रेरितैः प्रथमतः प्रणयेन व्रीडया विचलितैरथ किंचित् ।
तिर्यगञ्चितपुटैर्नयनैः सा तं ददर्श मुहुरम्बुरुहाक्षी ॥ ४० ॥
**श्रीजयन्त**जगदद्भुतरूपस्तम्भिताङ्गलतिकां नृपपुत्रीम् ।
तां विभाव्य सरसोक्तिसनाथं तत्सु(त्स)खी शशिमुखीति बभाषे ॥४१॥
संपदास्य पुरतस्तृणमिन्द्रस्तेजसा कमलिनीहृदयेशः ।
मीनकेतुरपि भासुररूपश्रीविशेषललितैः प्रतिभाति ॥ ४२ ॥
स्वर्गराज्यहरणोल्बणशङ्काशङ्कुसंकुलमना इव शक्रः ।
अस्य विश्वजयिनः श्रुतशौर्यः कौतुकादपि न भूतलमेति ॥ ४३ ॥
दानशौर्यगुणगौरयशोभिर्भूषितं सुभगमस्य चरित्रम् ।
गीयते स्मरतरङ्गितगात्रं स्वर्वधूभिरखिलास्वपि दिक्षु ॥ ४४ ॥
भाति भोगिषु तथा न फणीन्द्रस्तारकेषु न च तारकराजः ।
भासुरेषु न सुरेषु सुरेन्द्रः क्ष्माविलासिषु यथैष कुमारः ॥ ४५ ॥
विक्रमप्रथित**विक्रमसिंह**क्षोणिवल्लभकुलाम्बरचन्द्रम् ।
आत्मतुल्यगुणमाशु भजैनं दुर्लभो हि सदृशैः खलु सङ्गः ॥ ४६ ॥
धारयेव नववारिदपङ्क्तेः कान्तवर्णनगिराथ तथास्याः ।
केसरैरिव बभौ पुलकौघैः सा कदम्बसुमनःपटलीव ॥ ४७ ॥
साचि संचरणदक्षिणचक्षुः क्षिप्तमौक्तिकसदृक्षकटाक्षैः ।
वीक्षितो मृगदृशाथ **जयन्त**स्तत्करग्रहणसौख्यमिवाप ॥ ४८ ॥

सा विकासिवदनापि कुलीना लज्जया निगदितुं न शशाक ।
किं तु कम्पपुलकाञ्चितगात्रैरेव तं वरतया प्रतिपेदे ॥ ४९ ॥
प्रेर्यमाणमिव हर्षतरङ्गैरालिचक्रमचिरेण कुमार्याः ।
एत्य भूपमभिनम्य च सम्यक्तां व्यजिज्ञपयदीप्सितसिद्धिम् ॥ ५० ॥
तां विलोक्य जिनशासनदेवीं तत्र राजतनयापि तुतोष ।
श्रीकुमारवरदाननिदानव्यक्तभक्तिरथ पूजयति स्म ॥ ५१ ॥
निःसमानबहुमानविधानात्सप्रमोदहृदया सविशेषम् ।
देवता तदनु साजनि तस्याः कामधेनुरिव कासितदानैः ॥ ५२ ॥
अभ्यगादथ नृपः स महर्ध्या तं नरेन्द्रतनयं सह देव्या ।
सोऽपि तस्य विदधे प्रतिपत्तिं नौचितीं त्यजति जातु कुलीनः ॥ ५३ ॥
तौ कथां प्रथयतः स्म मिथस्तां प्रेमवारिनिधिवीचिमिवोच्चैः ।
या श्रुता सुरगुरोरपि चेतः स्मेरविस्मयरसं विदधाति ॥ ५४ ॥
कन्यका **कनकवत्यभिधाना** पादपङ्कजयुगे निजपित्रोः ।
सा सहेलमलिनीव महीयः स्नेहसौरभवशेन सिषेवे ॥ ५५ ॥
स व्यचिन्तयदिदं मम यू(नू)नं सांप्रतं विधिरभूदनुकूलः ।
मामकीनतनयावरयोर्यच्चन्द्रिकाशशभृतोरिव योगः ॥ ५६ ॥
रूपवैभवकलाद्भुतभाग्येनामुना जगति कोऽपि सदृक्षः ।
अस्य ते न तनया मम योग्या पाणिपीडनकृते कृतवर्ण्या ॥ ५७ ॥
इत्युदीर्य निजबन्धुसमक्षं विक्रमक्षितिपतेस्तनयाय ।
तं महेन महता स महीन्द्रः शौरये श्रियमिवाब्धिरदत्त ॥ ५८ ॥
सिक्तमार्गमथ कुङ्कुमनीरैर्यद्विचित्रकुसुमप्रकरं च ।
आम्रकम्रदलवन्दनमालं गोपुराग्रमणितोरणराजि ॥ ५९ ॥
वीज्यमानहरिदश्वरथाश्वैः केतुभिर्बहु चितं सितसौधम् ।
यद्विचित्रमणिभूषणरेखारामणीयकतरङ्गितपौरम् ॥ ६० ॥
**श्रीमदम्बरविलासपुरे** स्वः(स्वे) स्वःसमानगुणसंपदि तत्र ।
देवतार्पितविमाननिषण्णः पावनं **पवनगत्यभिधानः** ॥ ६१ ॥

संविधाय पुरतः खचरेन्द्रः श्रीजयन्तयुवराजविमानम् ।
आतपत्रचलचामरलक्ष्मा दत्तविस्मयरसं प्रविवेश ॥ ६२ ॥

(चतुर्भिः कलापकम्)

वैक्रमेस्तदनु कुण्डलसंज्ञस्तत्र सत्वरमुपेत्य····ह्रान्तिः ।
उक्ततातकुशलोऽथ समीपे काञ्चनासनमलंकुरुते स्म ॥ ६३ ॥
निश्चितेऽप्रतिमलग्नदिनेऽथ क्ष्मापतेर्मुदि मनो निममद्य(ज्ज) ।
कृत्यजातमपि बन्धुवधूभिर्भूपसंपदुचितं विदधेऽत्र ॥ ६४ ॥
प्रत्यहं करयुगाङ्गुलिपर्वश्रेणिभिस्त्वरितमेणदृशोऽस्याः ।
लग्नपूर्वदिवसान्गणयन्त्याः कान्तसंस्मृतिरभूत्खलनाय ॥ ६५ ॥
तां तदाभ्युदयभाजि मुहूर्ते विष्टरे मणिमये विनिवेश्य ।
सर्वमप्यविधवाः कुलवध्वस्तेनिरेऽथ विधिना विधिजातम् ॥ ६६ ॥
उद्यदम्बुरुहिणीप्रियरोचिः संगमारुणसरोरुहलक्ष्मीम् ।
सान्द्रयावकरसेन तदीयं रञ्जितं पदतलं जयति स्म ॥ ६७ ॥
निर्मिते च रुरुचेऽरुणरोचिः पादपङ्कजनखव्यपदेशात् ।
तत्तनोः कृतपदस्य सपर्या बन्धुजीवकुसुमैः कुसुमेषोः ॥ ६८ ॥
निःसपत्नविनिवेशितरत्नैः पञ्चवर्णकिरणाङ्कुरितैः सा ।
भूषणैरुपचिताङ्गविभूषा कल्पशाखिलतिकेव रराज ॥ ६९ ॥
यत्नसाधनमसूत्रि(त्र)त तस्याः सर्वतो लवणिमातिशयाय ।
तत्सुधाधवलनं तुहिनांशोः स्वादुताथ सितया च सुधायाः ॥ ७० ॥
निर्मितानि किरणैरिव चान्द्रैः पारिणेत्रसिचयान्यथ कन्या ।
पर्यधायि कृतकङ्कणबन्धा सूत्रितोचितविवाहविधेया ॥ ७१ ॥
सा विवाहसदनं नृपपुत्र्या देवता व्यरचयद्द्रुतमेव ।
भूरिभङ्गिरचनाञ्चितशोभावैभवादनिमिषैर्नृभिरीक्ष्यम् ॥ ७२ ॥
कामधेनुनवगोमयपूतं कल्पशाखिदलवन्दनमालम् ।
इन्द्रचापचतुरद्युतिदण्डैस्तोरणैर्मणिमयैरधिकश्रि ॥ ७३ ॥ (युग्मम्)
तत्र साङ्कमधिरोप्य कयाचिन्मातृदेव्यभिमुखं लघु नीत्वा ।
पादयोर्नतिमकार्यत तासामासिता च रुचिरासनमग्रे ॥ ७४ ॥

सप्रमोदपुलकं कलकण्ठध्वानगानजनितप्रमदाभिः ।
तत्क्षणोचितविधिप्रवणाभिः कृत्यवस्तुनि कृते प्रमदाभिः ॥ ७५ ॥

भूषितः सुरवितीर्णमयूखप्रेङ्खदुल्बणविभूषणमुख्यैः ।
आवृतः परिकरेण समन्ताच्चारुवेषरचनारुचिरेण ॥ ७६ ॥

विक्रमक्षितिपतेरथ सूनुः पाणिपीडनसमुत्सुकचेताः ।
प्राचलत्समधिरुह्य विमानं कामिनीनयनकैरवचन्द्रः ॥ ७७ ॥

(त्रिभिर्विशेषकम्)

वैत्रिणेव सुहृदा दिदशेन(?) स्नेहतः सपदि दर्शितमार्गः ।
द्वारि खेचरपतेः सदनस्य प्राप शंभुरिव सोऽथ हिमाद्रेः ॥ ७८ ॥

आगताभिरभिराजवधूभिः सूत्रनेत्रकमलैः परितोऽपि ।
पूज्यमानतनुरुत्तरति स्म स्मेरपङ्कजमुखः स विमानात् ॥ ७९ ॥

तस्थिवानथ मरुद्ध्वजदण्डं..........बमवव्यकरेण ।
कल्पपादपलताश्रितहस्तै(?)रावतश्रियमुवाह कुमारः ॥ ८० ॥

मङ्गलानि धवलानि च गायन्तीभिरद्भुतरसं वरवध्वोः ।
अर्थदानमथ कङ्कणबन्धसूत्रितस्य विदधे सधवाभिः ॥ ८१ ॥

ताः कुसुम्भरसरञ्जितवस्त्रं कण्ठकन्दललते विनिवेश्य ।
सौधमध्यमनयन्मृगनेत्राः श्रोत्रपेयकलगीतविलासम् ॥ ८२ ॥

**श्रीजयन्त** इति नामनि मन्त्रे योगिनीव मतकारिणि नीला ।
सास्ति यत्र कुसुमास्त्रपताका मातृपूजनमसौ विदधेऽत्र ॥ ८३ ॥

(युग्मम्)

वाससा शशिरुचाथ स तन्वीं तामशष्य(पश्य)दवगुण्ठितदेहम् ।
क्षीरसागरविसारितरङ्गैरावृताङ्गलतिकामिव लक्ष्मीम् ॥ ८४ ॥

कारिते हृदयहारिणि तारामेलके लघु यथाविधि तत्र ।
दृष्टयो मिथुनकस्य विरेजुः कामशाखिकुसुमोद्गमकल्पाः ॥ ८५ ॥

वेदिकाम्बरमितः सह वध्वा स्त्रैणमुल्लसितगीतमनैषीत् ।
तत्क्षणं च मकरध्वजराजं प्रोढमानमिह विश्वजयाय ॥ ८६ ॥

आसने कनकरत्नमयेऽसौ मोदमेदुरमना निषसाद ।
तस्य पार्श्वमभजन्नृपपुत्री वल्लरीव वनकल्पतरोः सा ॥ ८७ ॥
देवताभिरवरोधवधूभिर्बन्धुभिश्च विविधैरथ पौरैः ।
मन्दिरं नृपजनैरपरैस्तद्दाडिमीफलमिवाजनि बीजैः ॥ ८८ ॥
निःस्वने निभृतचक्षुषि लोके सावधानहृदये च नरेन्द्रे ।
झल्लरीध्वनिमुखेन विदित्वा लग्नमुच्चसकलग्रहरम्यम् ॥ ८९ ॥
हस्तलेपमतिपावनशम्यश्वच्छ(त्थ)चूर्णमति तूर्णमथार्द्रम् ।
श्रोत्रियः करतले नृपपुत्र्या न्यदिप(ध)त्स्मरतोरिव बीजम्(?) ॥ ९० ॥
(युग्मम्)

सेक्तुकाम इव तत्क्षणजातस्वेदबिन्दुनखरक्षरणेन ।
तच्च पाणिकमलेन कुमारः सोत्सवं स पिदधे सुमुहूर्ते ॥ ९१ ॥
तत्क्षणं धवलमङ्गलमिश्रैरुच्छलद्बहुलतूर्यनिनादैः ।
मण्डलानि स·········परितोऽग्नेर्निर्वृतिं च खचरक्षितिभर्तुः ॥ ९२ ॥
तत्र मण्डलचतुष्कसमाप्तौ खेचराधिपतिरात्मसुतायाः ।
पाणिमोचनमचीकरदुच्चैराज्यसारविभवेन कुमारम् ॥ ९३ ॥
तत्र दानसमये खचरेन्द्रः प्राज्यवाजिकरटीन्द्रघटाभिः ।
स्वर्णरत्ननिकरैश्च स चक्रे श्रीपतिं हरिमिवार्थिसमाजम् ॥ ९४ ॥
याप्ययानरथवाजिगजस्थै राजलोकनिवहैः सितचक्रैः ।
आवृतैः खशरभूमिभृतायं प्राज्यऋद्धिपरिवारवृतेन ॥ ९५ ॥
दम्पती समधिरुह्य विमानं छत्रचामरतरङ्गितकान्ती ।
पौरवर्ण्यगुणरूपविभूती प्रापतुस्तदनु तौ सदनं स्वम् ॥ ९६ ॥
(युग्मम्)

वैजयन्तमिव भूमितलेऽन्यं वासमन्दिरमगात्सह वध्वा ।
कामकेलिखुरलक्षितकल्पं यत्र कल्पितमदृश्यत तल्पम् ॥ ९७ ॥
यत्परस्परसमर्पितचि····साचि संचरितनेत्रयुगं तत् ।
यन्मनोभवमनोरथपात्रं तत्तयोरजनि दर्शनमत्र ॥ ९८ ॥

रूपकौतुकविलोकनलोलं लोचनाम्बुजयुगं च मिथस्तौ ।
हर्षबिन्दुभिरिवार्थयतः स स्वामिवाञ्छितकरः खलु पूज्यः ॥ ९९ ॥
तौ मिथोऽप्रतिमकौतुकरूपं श्रीविलोकनविमोहितनेत्रौ ।
तत्क्षणादमृतसिन्धुतरङ्गस्नापिताविव तदा समभूताम् ॥ १०० ॥
मुद्रितेक्षणयुगः सुखनिद्रामुद्रयानववधूपरिरम्भात् ।
उत्तरङ्गरतिसागरमग्नस्तत्क्षणं क्षणमिवैष निनाय ॥ १०१ ॥

देव त्वल्लीलयोच्चैर्धरणिधरशिरःश्रेणिषु न्यस्तपादः
पद्मोल्लासं समन्ताद्विदधयदुदयैः पद्मिनीप्राणनाथः ।
निद्रामुद्रादरिद्रे विरचय नयनाम्भोरुहे तत्कुमार
प्रातःकृत्यप्रवृत्तिं प्रकटय निकटस्पष्टकल्याणमालाम् ॥ १०२ ॥

इत्थं वैतालिकानां मुखकमलकलोत्तालकोलाहलेन
स्फूर्जन्मङ्गल्यतूर्यप्रसमरमधुरध्वानसंवर्गितेन ।
कान्ताविस्तारितुङ्गस्तनकलशतटाश्लेषसौख्ये निमातः
क्षिप्रं निद्रामुञ्चत्सकलसमयविद्विश्वविश्वैकवीरः ॥ १०३ ॥

प्रणतिपरनरेन्द्रश्रेणिरोचिष्णुरोचि-
र्मणिमुकुटविटङ्काङ्केषु संक्रान्तमूर्तिः ।
स विभुरथ बभाषे भक्तितस्तैरुदूढ-
प्रतिम इव समासे संनिभायां सभायाम् ॥ १०४ ॥

पवनगतिमथैत्य स्वामिदूतो बभाषे
तव कनकवतीति ख्यातिमत्यस्ति कन्या ।
निजतनयकृते तां याचते स्नेहगर्भं
गुरुविनयमय त्वां चक्रवर्ती महेन्द्रः ॥ १०५ ॥

तस्येति दूतस्य निशम्य वाचं तं प्रत्यवादीत्स मुदावनम्रः ।
राज्यं कुटुम्बं विभवश्च सर्वाः प्राणश्च मेऽस्यैव विभोः किमन्यत् ॥ १०६ ॥
दत्ता मया किंतु जयन्तनाम्ना भूगोचरेण क्षितिपाङ्गजेन ।
सा पर्यणायीति विभोर्निवेद्यं मदीयभक्त्या प्रथमं प्रसाद्य ॥ १०७ ॥

उवाच दूतोऽथ नरेन्द्रपूर्वं यत्प्रार्थितोऽपि प्रभुणा तथेयम् ।
ददे परस्मै तनया त्वया तन्नूनं कृतान्तः प्रगुणीकृतोऽयम् ॥ १०८ ॥
महापराधेन तव श्रुतेन क्रुद्धे विभौ कः शरणं जगत्सु ।
उत्कोपिते यष्टिमुखेन सिंहे क्षेमो हि कौतस्कुतमङ्गभाजः ॥ १०९ ॥
विराजमानं युवराजलक्ष्म्या श्रीचक्रिणोऽप्यस्य सुतं विहाय ।
भूगोचरस्यापि कथं त्वया सा द्विकस्य हंसीव ददे परस्य ॥ ११० ॥

एवं प्रत्यवदज्जयन्तसचिवो नीतिप्रियैः क्षत्रियै-
र्दूतोऽसीति न वध्यसे स्फुटतरं वध्योऽपि दुर्भाषणात् ।
यस्त्वं किंतु कुधीरवादयदिदं तं दुर्मदान्मेदुरं
युद्धे जीवितसंशयं मम विभोर्नेष्यत्यपास्य श्रियम् ॥ १११ ॥
हेलादिग्विजयार्जितोऽर्जितयशःशस्तप्रशस्ताक्षरै
रम्यां स्तम्भपरम्परां निहितवान्सर्वाब्धितीरेषु यः ।
हीलां कारयितुस्त्वदीयनृपतेश्छित्वा शिरःपङ्कजं
संग्रामाङ्गणदेवताङ्घ्रिकमले प्रक्षेप्तुमभ्येति सः ॥ ११२ ॥

श्रीस्वामिदर्पेण पुनर्विवक्षुः कण्ठप्रदत्ताप्रतिमार्धचन्द्रः ।
शश्वत्प्रहारैर्विहितः कठोरैर्वाक्यैः सभाया निरकाशि ······· ॥ ११३ ॥

इति श्वेताम्बरश्रीमदभयदेवाचार्यविरचिते श्रीजयन्तविजयनाम्नि महाकाव्ये श्रीशब्दाङ्के विवाहोत्सववर्णनस्त्रयोदशः सर्गः ।

---

## चतुर्दशः सर्गः ।

अथेति दूतादवगम्य सम्यग्विद्याधराणामधिपः प्रवृत्तिम् ।
करालकोपस्फुरदोष्ठपृष्ठः क्षणादभूद्भ्रूकुटिभीषणास्यः ॥ १ ॥
जयश्रियं संयति लब्धुमिच्छोस्तस्याबभुः स्वेदलवाः शरीरे ।
सापत्न्यसंभावनया विमुक्ता बाष्पाम्बुलेशा इव राजलक्ष्म्याः ॥ २ ॥
तस्याट्टहासः प्रससार दन्तप्रभाप्ररोहैरुपचीयमानः ।
परं समुल्लासमुपेयुषोऽन्तः शौर्याम्बुधेः फेनिलवानुकारः ॥ ३ ॥

दोष्णः कृपाणे च रुषाभिताम्रा तस्याघदृष्टिः शुशुभे पतन्ती ।
संग्रामकालस्य जयाय पूजानिमित्तमम्भोरुहमालिकेव ॥ ४ ॥
रराज गुञ्जारुणनेत्रकान्तिकरम्बिता तस्य कृपाणलेखा ।
समस्तवैरक्षितिपालशौर्यसूर्यास्तसंध्येव परिस्फुरन्ती ॥ ५ ॥
करीन्द्रकुम्भाहतिकर्कशेन स ताडयन्नंसतटं करेण ।
चिराय वैरिव्ययतः प्रसुप्तं प्रबोधयञ्शौर्यमिव व्यराजत् ॥ ६ ॥
इत्युल्लसत्तीव्रतराभिषङ्गः संग्रामसाध्यं रिपुमाकलय्य ।
अमात्यवृद्धानवधीर्य दर्पात्तं प्रत्यचालीद्रघुनूपुरेशः ॥ ७ ॥
तस्य प्रयाणक्षणवाद्यमाना समाननिस्वानमहानिनादः ।
स संभ्रमैर्निश्चलकर्णतालमाकर्णितो दिक्करिभिर्विवग्नैः ॥ ८ ॥
भेरीरवस्तत्र समुल्ललास तथा यथा ध्यानजुषां मुनीनाम् ।
स संभ्रमाणां करपङ्कजेभ्यो द्रुतं निपेतुः स्फटिकाक्षमालाः ॥ ९ ॥
तत्रोल्लसद्भिः पटहप्रणादैर्दिशां मुखानि प्रतिशब्दवन्ति ।
कुर्वन्ति सामन्तमहीपतीनामकारणं कारणतः स्वभर्तुः ॥ १० ॥
तत्रैककालं परिवाद्यमाननिश्वा(स्वा)नभेरीपटहप्रणादैः ।
संस्थापिता सारथिना त्रसन्तः कथं कथंचित्तरणेस्तुरङ्गाः ॥ ११ ॥
समारुरोहाथ समुल्लसद्भिर्ध्वजैः समन्तादुपढौकितश्रि ।
स चित्ररत्नद्युतिचित्रिताशं विमानमुन्निद्रतराभिमानः ॥ १२ ॥
जाते नभःप्राङ्गणसंगतेऽथ विद्याधरेन्द्रस्य तदा विमाने ।
क्रमेण सामन्तमहीपतीनां विमानपङ्क्तिः पिदधेऽन्तरिक्षम् ॥ १३ ॥
विद्याधराणां रुचिरैर्विमानैर्निरन्तराले पवमानमार्गे ।
श्री····कतैवांशुमतः समन्तादभूदभिज्ञानकृते तदानीम् ॥ १४ ॥
तस्याथ दैवे प्रतिकूलभावमुपेयुषि प्रोषितपुण्यराशेः ।
समुल्ललासाभिमुखो नभस्वान्कुर्वन्निवोच्चैर्गलहस्तितानि ॥ १५ ॥
तेन प्रचण्डेन समीरणेन समूलमुन्मूलयता पताकाः ।
विनिर्मिता खेचरभूपतीनां विलूनवेणीव विमानमाला ॥ १६ ॥

समन्ततः शोणितपङ्कपिण्डविडम्बनाडम्बरमादधानः ।
बभूव दुष्प्रेक्ष्यतरः खरांशुरवस्थितोऽन्तःपरिवेषमुच्चैः ॥ १७ ॥
दिवाकराधिष्ठितदिग्विभागमाश्रित्य फेत्कारपरम्पराभिः ।
भृशं शिवाः कातरजन्तुजातमुत्त्रासयन्त्यः प्रकटीबभूवुः ॥ १८ ॥
गच्छन्ति मार्गे सममेव गृध्रश्येनादयः क्रूरपतत्रिणस्तैः ।
व्यापारयन्तो नयनान्यभीक्ष्णं तेषां शरीरेष्वतिमांसलेषु ॥ १९ ॥
पतिप्रयाणां स्खलतोऽप्यभीक्ष्णं स दुर्निमित्तैरिति खेचरेन्द्रः ।
आकृष्यमाणाः किल कालपाशैः स्वदेशसीमानमलंचकार ॥ २० ॥
अत्रान्तरे चारमुखात्तदीयं प्रस्थानमाकर्ण्य स कर्ण्यवर्ण्यः ।
महीपतिर्वायुगतिर्जयन्तममात्यवृद्धांश्च तदेत्यवोचत् ॥ २१ ॥
असौ समागच्छति खेचरेन्द्रः सान्द्राभिषङ्गः किल संयुगाय ।
प्रचण्डदोर्दण्डबलावलेपादपि त्रिलोकीं कलयंस्तृणाय ॥ २२ ॥
जानामि तावद्भुजवीर्यमस्य जानामि राज्याङ्गसमग्रतां च ।
एतच्च जानामि यदस्य दैवमन्यायवृत्तेः प्रतिकूलमेव ॥ २३ ॥
अतः समायान्तममुं निशम्य संग्रामकामं न मदीयमेतत् ।
दोर्दण्डयुग्मं सहते विलम्बमतः परं यूयमिह प्रमाणम् ॥ २४ ॥
इत्थं समाकर्ण्य वचस्तदीयं न्यायानुविद्धं च समुद्धतं च ।
कालोचितं नीतिपथप्रवीणैः पुरस्कृतं मन्त्रिवरैस्तदेव ॥ २५ ॥
यातव्य एवायमयं न साध्यो विद्याधरेन्द्रस्तव देव सद्यः ।
उपेक्ष्यते कोऽभ्युदयी समीपं समीयिवांसं रिपुमस्तशास्तम् ॥ २६ ॥
समस्त्यसाध्यं भुवनत्रयेऽपि किं नाम देवस्य सदैव यस्य ।
हठोद्धृताऽरातिबलावलेपः सहायतामेव जयन्तदेवः ॥ २७ ॥
इत्थं च नैमित्तिकभाषितं तत्कृतार्थतामेतु जयन्तदेव ।
अतः प्रचण्डेऽपि नभश्चरेन्द्रजयाय नूनं विजयोद्यमो वाम् ॥ २८ ॥
इतीरितं नीतिपथानुकूलममात्यवृद्धैर्वचनं निशम्य ।
महीपती तौ रभसादभूतां निपीतपीयूषरसाविवोच्चैः ॥ २९ ॥

महीपतिर्वायुगतिस्तदानीं विद्या समग्रा अपि सानुबन्धाः ।
प्रीत्या कुमाराय ददौ स तस्मै किमस्त्यदेयं हृदयंगमानाम् ॥ ३० ॥
अनन्तरं विक्रमसिंहसूनोः प्रत्यग्रपुण्योपचयाञ्चितस्य ।
असाधिता अप्यनुकूलभावं प्रपेदिरे ताः किल पाठसिद्धाः ॥ ३१ ॥
ततः प्रतस्थे स्थिरचित्तवृत्तिः शुभे मुहूर्ते पुरुहूतकान्तः ।
सामन्तसेनापतिमन्त्रिमुख्या नानन्द सद्यः स पुरस्क्रियाभिः ॥ ३२ ॥
प्रयाणतूर्यध्वनिभिः समन्तान्नभोगणं नादमयं वितन्वन् ।
विमानमालाभिरपि प्रकामं समुद्गतार्के दु(?)सहस्रशोभि ॥ ३३ ॥
(युग्मम्)
तस्मिन्क्षणे दुन्दुभिमेघनादमाकर्ण्य तद्वीर विदूरभूमिः ।
मुमोच रोमाञ्चचयापदेशाद्दलाङ्कुरश्रेणिमिव प्रकामम् ॥ ३४ ॥
गभीरभेरीरणितैरमर्त्यमर्त्येषु दूरं बधिरीकृतेषु ।
तदात्मनः सर्पकुलं श्रुतीनामभावमुच्चैर्बहु मन्यते स्म ॥ ३५ ॥
तस्य प्रयाणक्षण एव देवैः प्रसूनवृष्टिर्मुमुचे नभस्तः ।
छन्दानुवर्तीव समीरणोऽपि मार्गानुगामी समजायतास्य ॥ ३६ ॥
वामेतरेणाक्षिसरोरुहेण प्रस्यन्दमानेन तथा भुजेन ।
तदात्मनः संयति सांयुगीनः स निश्चिकायाभ्युदयं जयन्तः ॥ ३७ ॥
तस्य प्रतापेन पुरस्कृतो वा बभूव भानुर्द्विगुणप्रतापः ।
सु(स्व)श्रीकृतानीव तदीयकीर्त्यैः प्रसादमापुः ककुभां मुखानि ॥ ३८ ॥
उपक्रमोऽयं विजयाय भावी तस्येति नूनं शकुनाः शशंसुः ।
प्रदक्षिणावर्तमिषेण येन ददुर्निजं दक्षिणहस्तमस्मै ॥ ३९ ॥
इत्युल्लसद्भिः शकुनैरनिन्द्यैरानन्दसंदोहतरङ्गिताङ्गः ।
अलंचकार क्षितिपालचन्द्रः स्वदेशसीमानममानमानः ॥ ४० ॥
समीपभावं समुपागतेऽथ विद्याधराणां शिबिरद्वयेऽपि ।
परस्परं यामिकसैनिकानां भवत्सु कोलाहलडम्बरेषु ॥ ४१ ॥
अन्योन्यशौण्डीर्यगुणप्रकर्षप्रकाशनोत्तालकुतूहलेषु ।
मिथः प्रयुक्तेषु च संचरत्सु तदन्तरे बन्दिपुरंदरेषु ॥ ४२ ॥

निरूपिते निर्भरसङ्गराय दिनेऽथ दैवज्ञगुणैर्गुणाढ्यैः ।
भेरीरवापूरितरोदसीकं सैन्यद्वयं तत्प्रगुणीबभूव ॥ ४३ ॥
(त्रिभिर्विशेषकम्)

पूर्वाचलं चुम्बि(म्ब)ति चण्डरश्मौ विसेरवक्राम्बुरुहो **जयन्तः** ।
प्रत्यूषकृत्यं विधिवद्विधाय संस्मृत्य चान्तःस्मरणीयमिष्टम् ॥ ४४ ॥
प्रदक्षिणीकृत्य पतिं प्रभूणामुदङ्मुखः संगरबद्धलक्ष्यः ।
आनन्ददानैरनुजीविवर्गं संग्राममभूमिं समलंचकार ॥ ४५ ॥ (युग्मम्)
अनन्तरं वायुगतिर्नरेन्द्रः समस्तसामन्तसनाथपार्श्वः ।
लब्धाग्ररेखः समराजिरेषु तस्याग्रतोऽभूदसमाभिमानः ॥ ४६ ॥
**विद्याधरेन्द्रो**ऽपि सहस्रसंख्यैः सामन्तसेनापतिभिः परीतः ।
सुते पुरोवर्तिनि सांयुगीने रत्नाङ्गदे संगररङ्गमागात् ॥ ४७ ॥
अवन्ध्यविद्याबलतस्तदानीं पक्षद्वयेऽपि प्रसरत्प्रतापम् ।
आविर्बभूव प्रतिपन्थिका(सा)र्थविक्षोभदक्षं चतुरङ्गसैन्यम् ॥ ४८ ॥
ततः कृतान्तभ्रुकुटीकरालकोदण्डचण्डध्वनिपूरिताशम् ।
समं समानैः परिपन्थिसार्थैः प्रारब्धमायोधनमग्रसैन्यैः ॥ ४९ ॥
समुल्लसद्भूरितरान्धकारे निरन्तराभिः शरधोरणीभिः ।
दिवापि निर्भर्त्सितभानुबिम्बं नभस्यभूत्तारकचक्रवालम् ॥ ५० ॥
धनुर्धरः कश्चिदवार्यवीर्यः शौर्यातिरेकाद्युगपत्क्षुरप्रैः ।
प्रत्यर्थिवीरस्य पतत्त्रिपङ्क्तिमौर्वीजयाशां च···[1]लुलाव ॥ ५१ ॥
निशातनिस्त्रिंशविशीर्णजीर्णशरीरबन्धैर्युधि वीरवर्गैः ।
संप्राप्य दिव्यं वपुराशु मेने परापकारोऽप्युपकार एव ॥ ५२ ॥
परस्परप्रेरितशस्त्रसंघसंघट्टजन्मा जगतः पतीनाम् ।
जयश्रियः पाणिसमागमेऽभूत्प्रदक्षिणा योग्यदशः कृशानुः ॥ ५३ ॥
प्रमादिनं वीक्ष्य विपक्षवीरमरातिसूतः प्रयतः प्रहर्तुम् ।
तदीयनिस्त्रिंशहतोरुयुग्मः सद्यः प्रपेदेऽरुणसारथित्वम् ॥ ५४ ॥

---

१. 'जवा' इति स्यात्.

प्रचण्डदण्डाहतिचूर्णितानां रथस्थितानां रथिनामुपेत्य ।
परस्परास्त्रोन्मथनप्रसूतः पर्यन्तकृत्यं दहनश्चकार ॥ ९९ ॥ (युग्मम्)
प्राणांस्तृणीकृत्य विपक्षकुम्भिकुम्भस्थलीपाटनलम्पटोऽन्यः ।
तदीयमुक्ताफलबीजवापमसूत्रयत्कीर्तिलतोद्गमाय ॥ ९६ ॥
आधोरणानामभितः पतद्भिर्विपक्षविक्षोभकरैश्च कुन्तैः ।
तुरङ्गिणः कीलितकायकाण्डाः समं तुरङ्गैरगमन्रसायाम् ॥ ९७ ॥
तुरङ्गमातङ्गनरोत्तमाङ्गैर्निरन्तराले रणरङ्गपीठे ।
परस्परं लोचनगोचरस्थैरपि प्रहर्तुं चकमे न वीरैः ॥ ९८ ॥
परिच्युतं संयति गाढघाताच्छिरः शिरस्त्रप्रतिबद्धमेव ।
परामृशन्पक्षगणस्तदापत्रोटत्त्रुटेरन्यदहो न किंचित् ॥ ९९ ॥
निशातशस्त्रप्रविदीर्णदेहैर्नागैर्नगेन्द्रप्रतिमैर्निपत्य ।
शिरःसरोजाभरणाः कियन्त्यः कीलालकुल्या परिकल्पिता न ॥ ६० ॥
इति प्रवृद्धे समरोपरागेऽप्यरागवत्तीव्रजवैर्मरुद्भिः ।
श्रीमज्जयन्तस्य विपक्षसैन्यैर्बलं बलिष्ठैः परितोऽवधूतम् ॥ ६१ ॥
ततः प्ररूढप्रमदो मदान्धैर्भूपालवृन्दैरनुगम्यमानः ।
जयन्तमुद्दिश्य विवृद्धकोपो विद्याधराधीशसुतः प्रतस्थे ॥ ६२ ॥
तं वीक्ष्य विक्षोभकरं परेषां परापतन्तं रभसादसह्यम् ।
तदन्तरे वायुगतिर्नरेन्द्रः प्रत्यग्रहीदग्रसरो रणेषु ॥ ६३ ॥
तयोरथोल्लम्भितभीमनादमुदारनाराचतिरोहिताशम् ।
त्रुटत्तनुत्रं भरभग्नपत्रं त्रसज्जनं जन्यमजायतोच्चैः ॥ ६४ ॥
समुच्छलद्भिर्गजगर्जिनादैर्हेषारवैरश्चमतल्लिका···· ।
प्रवीरकण्ठध्वनिभिश्च विश्वं विश्वं तदा नादमयं बभूव ॥ ६९ ॥
कश्चित्प्रवीरः परिपन्थिशस्त्रप्रहारमूर्च्छाविधुरोऽतिमात्रम् ।
प्रयातु कामानपि नातु[1] मेने प्रतिप्रहारप्रविधित्सयासून् ॥ ६६ ॥
हस्तप्रतिद्वन्द्विकृपाणलूने शिरस्यथो सायककीलितेऽन्यः ।
निहत्य सामर्षतया विपक्षं विलक्षकीर्तिर्दिवमारुरोह ॥ ६७ ॥

---

१. 'जा' इति स्यात्.

प्रहारमूर्छाप्रविलुप्तसंज्ञं वरार्थिनी कंचिदुपेत्य वीरम् ।
पुनः प्रवृत्तं प्रधनाय दृष्ट्वा जगाम लज्जां विधुरा सुरस्त्री ॥ ६८ ॥
आधोरणैस्तीव्ररुषः प्रयुक्ताः करैः प्रवीरान्करिणोऽभिगृह्य ।
चक्रुः समाक्रम्य वपुः पदाभ्यां शिरःसरोजैर्बलिमन्तकाय ॥ ६९ ॥
रथाङ्गधीरध्वनिनादमुद्यत्प्रहारकूजत्करिकण्ठनादम् ।
नृत्यत्कबन्धं समराङ्गणं तत्कृतान्तसंगीततुलां प्रपेदे ॥ ७० ॥
गतेऽथ दैवे प्रतिकूलभावं विद्याधराधीश्वरसूनुसैन्यम् ।
कुलं द्विपानामिव सिंहनादादरातिशस्त्रोन्मथनाद्विशीर्णम् ॥ ७१ ॥
ततः प्रहस्य प्रहतप्रवीरकपालमालाकुलितं रणाग्रम् ।
रत्नाङ्गदं वायुगतिर्विधृत्य जयन्तपादान्तिकमानिनाय ॥ ७२ ॥
निशम्य सूनोरपमानमुच्चैर्नभश्चरेन्द्रोऽप्यथ सान्द्रकोपः ।
अनन्यसाध्यं रिपुमाकलय्य प्रचक्रमे स स्वयमाहवाय ॥ ७३ ॥
तस्मिन्समाक्रामति च प्रदोषे तमःसमूहैरिव भूरिसैन्यैः ।
रणाङ्गणं पूर्वमहीधरं वा जयन्तशीतांशुरलंचकार ॥ ७४ ॥
ततस्तयोः संप्रयुजे प्रकोपप्रकम्पमानाधरयोः क्षणेन ।
दृशाथ दृष्टिर्वचसा च वाक्यं शस्त्रेण शस्त्रं युगपत्प्रहर्त्रोः ॥ ७५ ॥
वितेनतुर्निर्विवरं प्रवीराववन्ध्यपातैरिषुभिस्तु तस्थौ ।
नभोऽङ्गणं संगरदर्शिनीनां शूराङ्गनानां जनिताभ्यसूयौ ॥ ७६ ॥
शस्त्रैर्धनुःखड्गभुशण्डिभल्लनाराचचक्रप्रमुखैः सरोषम् ।
कुर्वाणयोः संगरकर्म तीव्रं तयोर्न कश्चित्परभागमाप ॥ ७७ ॥
स दुर्गतस्येव मनोरथेषु समस्तशस्त्रेषु फलीभवत्सु ।
विद्याधरेन्द्रोऽरिवधाय दृप्तं मुमोच दिव्यं द्विरदास्त्रमुच्चैः ॥ ७८ ॥
रणाङ्गणे वैरिवरान्कराग्रैरुल्लासयन्तः कलभास्ततोऽस्मात् ।
निश्चक्रमुः संगरसंमुखानां स्वर्गं स्वदेहैरिव दर्शयन्तः ॥ ७९ ॥
प्रचण्डदन्तावलदन्तदण्डविखण्डितं वीक्ष्य जयन्तदेवः ।
सैन्यं विपक्षक्षयबद्धलक्ष्यः पञ्चाननास्त्रं विससर्ज सद्यः ॥ ८० ॥

बिम्बादिव व्योममणेर्मयूखाः सहस्रशः केशरिणः प्रसस्रुः ।
तस्मादकस्मादिभकुम्भपीठं विपाटयन्तः कुटिलैर्नखाग्रैः ॥ ८१ ॥
विद्याधरेन्द्रोऽप्यथ वारणेन्द्रान्पारीन्द्रवृन्दैर्निहितानवेत्य ।
समाददे तद्वधबद्धकक्षमक्षीणशक्तिः शरभास्त्रमुच्चैः ॥ ८२ ॥
उदस्तहस्ताः शरभास्ततोऽस्मात्पञ्चाननान्कन्दुकलीलयैव ।
समुत्क्षिपन्तो नवनीरवाहगभीरधीरध्वनयो निरीयुः ॥ ८३ ॥
तिरस्कृतान्वीक्ष्य विपक्षमुक्तैः सिंहानथासौ शरभैर्नृसिंहः ।
आग्नेयमस्त्रं त्रिपुराय पूर्वं पुरान्तकारीव मुमोच दृप्तम् ॥ ८४ ॥
धूमावलिश्यामलिताम्बरान्तैर्बभौ भटित्रीकृतवीरवारम् ।
जाज्वल्यमानैर्ज्वलनैः कृतान्तमहानसं वा समराजिरं तत् ॥ ८५ ॥
भसीकृतान्खेचरचक्रवर्ती शिखिप्रपञ्चैः शरभानवेत्य ।
ततस्तदाटोपहरं तपस्वी पाथोधरास्त्रं तरसा मुमोच ॥ ८६ ॥
ततोऽन्धकारीकृतदिग्विभागैः स्तनद्भिरुल्लासिसुरेन्द्रचापैः ।
तडिल्लतादन्तुरितैः प्रदृष्टमुच्चैस्तरां तत्र घनाघनौघैः ॥ ८७ ॥
अथानले चञ्चलदीप्तिदम्भादम्भोधराणां शरणं प्रपन्ने ।
पयोदसंमर्दविधाववन्ध्यं वायव्यमस्त्रं नृपतिर्मुमोच ॥ ८८ ॥
दिशो दिशं तूलमिव क्षिपन्तः पयोदवृन्दं मरुतस्ततोऽस्मात् ।
निरीयुरायोधनकर्मवन्ध्यं प्रत्यर्थिसैन्यं च महाजवेन ॥ ८९ ॥
ततः प्रकोपप्रसरत्कदुष्णश्वासानिलान्दोलितहारयष्टिः ।
विद्याधरेन्द्रः पवनाशनास्त्रं मुमोच तच्चापलदोषहारि ॥ ९० ॥
प्राणान्पिबन्तस्त्रिजगज्जनानां कौटिल्यमुच्चैरुपदर्शयन्तः ।
क्षतं विनैवाङ्गभृतां लगन्तस्ततः प्रसस्रुः प्रसभं द्विजिह्वाः ॥ ९१ ॥
भुजङ्गपूगग्रसनादजस्रं प्रभञ्जने भङ्गुरतां प्रयाते ।
प्रत्यस्त्रमुच्चैरमुचन्महीपो महीपतिः पत्त्ररथेन्द्रसंज्ञम् ॥ ९२ ॥
उत्पातवातो····तपक्षपातप्रकम्पिताशेषनगाः खगेन्द्राः ।
तस्मान्निरीयुर्निजकायकान्त्या पतिं प्रभाणामपि भर्त्सयन्तः ॥ ९३ ॥

मृणालनालोपमया निमेषाद्भुजङ्गपूगे कवलीकृते तैः ।
मुमोच गुञ्जामुखमेव कामं नभश्चरेन्द्रस्तिमिरास्त्रमुच्चैः ॥ ९४ ॥
तमालतालीगवलालिनीलैर्नीलीरसेन स्नपितामिवोर्वीम् ।
कुर्वद्भिरुद्भूतमथान्धकारैः कारानिकेतप्रतिमैः परेषाम् ॥ ९५ ॥
निमीलिता लोचनचक्रवाले विहङ्गमानामनुजीविनां च ।
ध्वान्तस्ततस्तत्परिपन्थिभूतं प्रद्योतनास्त्रं नृपतिर्मुमोच ॥ ९६ ॥
ततः किरन्तः करजालमुच्चैर्विस्मेरयन्तो नयनाम्बुजानि ।
विशोषयन्तः परवाहिनीं च प्रादुर्बभूवुस्तपनाः समन्तात् ॥ ९७ ॥
निराकृते संतमसः प्रचारे खरांशुभिः खेचरचक्रवर्ती ।
दिशद्दृशां दीनतरामरीणां विधुंतुदास्त्रं तरसा मुमोच ॥ ९८ ॥
देहं विनाप्याश्रितविग्रहोग्रास्तमःस्वरूपा अपि तर्ज्जितार्काः ।
निकृत्तकण्ठा अपि चित्समग्राः प्रसस्रुरुच्चैरथ सैंहिकेयाः ॥ ९९ ॥
स्वर्भाणुभिर्भास्करचक्रवाले बलावलेपात्कवलीकृतेऽथ ।
श्रेणीद्वयस्यापि भविष्णुचक्री चक्रायुधास्त्रं तरसा मुमोच ॥ १०० ॥
देहप्रभापीवरिताम्बरान्तास्तस्मादकस्मान्मुरविद्विषोऽथ ।
निश्चक्रमुश्चक्रगदाकृपाणकोदण्डदण्डाञ्चितबाहुदण्डाः ॥ १०१ ॥
तेषां च तीव्रांशुसितांशुरूपे विजृम्भिते लोचनचक्रवाले ।
कृतापराधैरिव यत्तमोभिः पलायितं हन्त किमत्र चित्रम् ॥ १०२ ॥
गतेषु दूरं विधवाङ्गनानां लावण्यरूपेष्विव निष्फलत्वम् ।
अस्त्रेषु शस्त्रेषु च खेचरेन्द्रस्त्रपावनम्रो जगदे नृपेण ॥ १०३ ॥
हंहो महावीर विमुञ्च लज्जां रणान्निवर्तस्व भव स्वराज्यम् ।
किं नाम तारुण्यबलावलेपो भवन्तमद्याप्युपरीकरोति ॥ १०४ ॥
श्रुत्वेति कोपान्धितधीर्नरेन्द्रः सोऽप्याह योग्योऽस्मि न तेऽधुनापि ।
गम्योऽस्ति गोमायुशिशोः कदाचिद्वृद्धोऽपि किं रे हरिणाधिराज१०५
अस्मादिदं दुर्वचनं प्रवृत्तमितीव रोषात्त्रिपुरान्तकास्त्रम् ।
अमोघमस्मै नृपचक्रवर्ती मुमोच चिच्छेद च कण्ठपीठम् ॥ १०६ ॥

अथ सुरपथवल्गद्दिव्यभेरीनिनाद-
द्विगुणितकलभृङ्गारावगर्भं नभस्तः ।
शिरसि सुरकराब्जप्रेरितं पुष्पवर्षं
न्यपतदवनिभर्तुर्मङ्गलोद्गारसारम् ॥ १०७ ॥

पुरमथ रथनूपुराभिधानं गगनचरैः परिवारितः प्रविश्य ।
अभजत निजपौरुषोपनीतामवनिपतिः खचराधिराजलक्ष्मीम् ॥ १०८ ॥

तदनु विनयवामना नरेन्द्राः खचरपतेरनुजीविनः प्रणम्य ।
अवनिपरिवृढं किरीटकोटीघटितकराः शिरसा दधुस्तदाज्ञाम् ॥ १०९ ॥

विलेभे विषयान्सद्यस्तेषामपि महीपतिः ।
न नाम महतां सेवा भजते जातु वन्ध्यताम् ॥ ११० ॥

राज्याभिषेकमनुभूय **नभश्चरेन्द्र-**
सूनुं निदेशगतमत्र निवेश्य यानम् ।
श्रीमान्स **वायुगति**संनिहितोऽधिरुह्य
स्वं राज्य**मम्बरचराधिपतिः** प्रतस्थे ॥ १११ ॥

इति श्वेताम्बरश्रीमदभयदेवाचार्यविरचिते श्रीजयन्तविजयनाम्नि महाकाव्ये श्रीशब्दाङ्के आयुधवर्णनो नाम चतुर्दशः सर्गः ।

---

पञ्चदशः सर्गः ।

इतश्च **सुस्थितः** सूरिः **श्रीजयन्त्यां** समाययौ ।
निजै रराज यः शिष्यैः कल्पशाखीव पल्लवैः ॥ १ ॥

मूर्तिमानिव यो धर्मः कुलशान्तेरिवामलम् ।
कृपावरेण्यपण्यस्त्रीलास्यलीलैकरङ्गभूः ॥ २ ॥

उद्यत्तीव्रं तपस्तेजः सोमत्वं च परं दधत् ।
यो बभौ मिश्रितैः सृष्टः पुष्पदन्तदलैरिव ॥ ३ ॥

यः केवलावलोकेन विरेजे संशयच्छिदा ।
व्योमेव व्योमरत्नेन ध्वान्तध्वंसपटीयसा ॥ ४ ॥

यद्गुणैर्हृतचित्तोऽपि तत्त्वार्थविदुराग्रणीः ।
जायते जनता चित्रं कस्य नेदं विवस्वतः ॥ ५ ॥

श्रुतपूर्वी समायातं निजोद्याने महीपतिः ।
गत्वा **विक्रमसिंह**स्तं ववन्दे सपरिच्छदः ॥ ६ ॥
ततश्च दशनज्योतिर्ज्योतिताधरपल्लवः ।
आनन्द्य धर्मलाभेन तमारेभे स देशनाम् ॥ ७ ॥
सार्वसर्वोपमातीतः समस्ताद्भुतवैभवः ।
श्रीसर्वज्ञपरं देवः सतां निःश्रेयसः श्रिये ॥ ८ ॥
तदाज्ञामौलिमाणिक्यः सुसाधुश्च गुरुर्मतः ।
यतः पारीणतां याति जन्तुः संसारवारिधेः ॥ ९ ॥
लोकंपृणः पृणीतस्तैर्धर्मो जीवदयाग्रणीः ।
यो मनोरथवल्लीनां स्पर्द्धते निजदोहदैः ॥ १० ॥
जैनं जनस्य दानानि धर्मकर्म चतुर्विधम् ।
राजसैन्यमिवानन्यदन्तरारि जयश्रिये ॥ ११ ॥
सुगतिप्रेयसी पुंसां बोभवीति वशंवदा ।
जृम्भमाणे जिनेन्द्रोक्तधर्मकार्मणकर्मणि ॥ १२ ॥
इति देशनया सूरेर्मिथ्यात्वममुचन्नृपः ।
निःशङ्कं पङ्कसंपर्कं शरदेव सरिज्जलम् ॥ १३ ॥
श्रद्धासमृद्धिसंबन्धबन्धुरो धरणीधवः ।
श्राद्धधर्मधुराधीरधौरेयत्वमधात्ततः ॥ १४ ॥
अत्रान्तरे द्विजः कश्चित्पाण्डित्यमदमेदुरम् ।
वाचमुल्लासयामास सर्वज्ञाभावसिद्धये ॥ १५ ॥
मत्सरो नात्र मे राज्ञा सर्वज्ञो मन्यतेऽद्य यत् ।
अप्रमाणेन तेनायं किं त्वेतैर्विप्रतारितः ॥ १६ ॥
सर्वज्ञो नास्ति यद्ग्राह्यः प्रमाणैः पञ्चभिर्न सः ।
यदेवं तद्भवेदेवं यथा व्योमसरोरुहम् ॥ १७ ॥
[1]·········रम्याङ्गहारिण्यो यथा रूपं मृगीदृशः ।
विलोकते तथा चक्षुः सर्वज्ञस्य न जातुचित् ॥ १८ ॥

१. 'मनो' इति स्यात्.

वधूनामधरस्येव मधुरां मधुसंपदम् ।
नैव सर्वज्ञतां जातु गृह्णीते रसनेन्द्रियम् ॥ १९ ॥
ग्रामरागादिसंदर्भगर्भसौभाग्यभूषणम् ।
गीतिभङ्गीमिवादत्ते श्रोत्रं सर्वज्ञतां नहि ॥ २० ॥
कर्पूरागरुकस्तूरीविचित्रकुसुमोद्भवम् ।
सौरभ्यमिव नादत्ते सर्वज्ञं घ्राणमिन्द्रियम् ॥ २१ ॥
सर्वज्ञोऽस्तीति न ज्ञानं स्पृशति स्पर्शनेन्द्रियम् ।
कुष्टिन्यङ्गमिवानङ्गसमाङ्गो जातु धीधनः ॥ २२ ॥
प्रत्यक्षं पञ्चधाप्येवं सुधासर्वज्ञसाधने ।
तत्प्रतिष्ठाविधौ मानं जातु मानं च वल्गति ॥ २३ ॥
लिङ्गेन लिङ्ग्यते लिङ्गी साध्यधर्मविभूषितः ।
अविनाभावसंबन्धं संबन्धेन च नात्र तत् ॥ २४ ॥
सर्ववित्तोपमानेन प्रमाणेनैष गृह्यते ।
प्रवर्तते हि सादृश्यात्तद्गोगवययोरिव ॥ २५ ॥
परेषां नागमेनापि सर्ववित्साध्यते बुधैः ।
अन्योन्याश्रयदोषो हि निर्विवादोऽत्र वादिनाम् ॥ २६ ॥
नार्थापत्तिप्रमाणं च सर्वज्ञास्तत्त्वसिद्धये ।
तत्र साध्या विनाभावभावो यत्रास्ति कश्चन ॥ २७ ॥
प्रमाणपञ्चकस्यैवं सर्वज्ञो नास्ति गोचरः ।
तदभावप्रमाणेनाभावस्तस्येति मन्यताम् ॥ २८ ॥
अनुज्ञया गुरोस्तस्य **क्षुल्लको** वादिसत्तमः ।
प्रतिवादिवचोऽनूद्य दूषयामास वादिनः ॥ २९ ॥
न सर्वज्ञः प्रसिद्धस्ते साध्यधर्मीह साधने ।
अप्रसिद्धविशेष्यत्वं पक्षदोषः स्फुटस्ततः ॥ ३० ॥
हेतुमप्याश्रयासिद्धहेतु''''''''दूषितम् ।
अन्धुमन्ध इवाग्रेऽपि कुदृष्टे त्वं न पश्यसि ॥ ३१ ॥

प्रमाणपञ्चकं तस्याग्राहकं तव चेन्मतम् ।
आत्मीयं परकीयं वा तार्किकंमन्य तद्वद ॥ ३२ ॥
प्रत्यक्षाद्यैस्तवाज्ञातं यदि वस्तु न विद्यते ।
तदा पितामहाद्याः स्युरसंभवपदं तव ॥ ३३ ॥
ततस्तवापि नो जन्म संभवीति प्रसज्यते ।
पण्डितैस्तदहो श्लाघ्यं पाण्डित्यं खण्डितान्वयम् ॥ ३४ ॥
द्वितीयके तु पक्षे स्यान्नूनं सर्वज्ञता तव ।
यो वेत्ति तत्र सर्वेषां प्रत्यक्षाद्यप्रवर्तनम् ॥ ३५ ॥
ब्रूषेऽथ साध्यधर्मीह सर्वज्ञः परसंमतः ।
ततश्च पक्षहेमू(तू)क्तदोषो श्लेषोऽपि कोऽपि न ॥ ३६ ॥
तेन निर्मूलमेवेदं साधनं यत्त्वयोदितम् ।
प्रामाण्यकोटिसंटङ्कं कथमाटीकते ततः ॥ ३७ ॥
प्रमाणमप्रमाणं वा पराभ्युपगमस्ततः ।
प्रमाणं चेत्त्वयैवेदं साधितं नः समीहितम् ॥ ३८ ॥
अप्रमाणे तु तत्र स्युः सर्वे दोषास्तथैव ते ।
पाण्डित्यमुखयोर्मूर्खमालिन्याय मखीसखा ॥ ३९ ॥
अथ ब्रूषे प्रमेयोऽयं कल्पनयैन(?) कल्पितः ।
विद्यमानस्य सा तस्या विद्यमानस्य वामता ॥ ४० ॥
पक्षे सा प्रथमे व्यर्था तस्य सत्वाद्विनापि ताम् ।
तृद्विधानेऽपि वेदादौ भवेत्सातिप्रसङ्गतः ॥ ४१ ॥
स तु कल्पनया हन्ति निरासो नोचितस्ततः ।
विरुद्धसाधकत्वेन विरुद्धो हेतुरत्र ते ॥ ४२ ॥
अथास्याविद्यमानस्य कल्पनाभिमता तव ।
एवं न कोऽपि हेतुः स्यादाश्रयासिद्धिभोजनम् ॥ ४३ ॥
बौद्धं प्रत्यात्मनित्यत्वे साध्येऽनुत्पत्तिरादृता ।
सुकल्पसाध्यधर्मित्वात्सद्धेतुः स्यात्प्रसङ्गतः ॥ ४४ ॥

प्रमाणपञ्चकाभावः सर्वज्ञाभावसिद्धये ।
ज्ञातोऽनवस्थयाक्रान्तो ज्ञातोऽज्ञस्यापि किं न सः ॥ ४५ ॥
संबन्धग्रहणं तत्र न मानाग्राह्ययोस्तयोः ।
इत्यज्ञाते स्वरूपेऽस्यस्वरूपासिद्धता भवेत् ॥ ४६ ॥
पुरुषत्वान्न सर्वज्ञः सोऽस्मदादिवदित्यपि ।
न युक्तमत्र संदिग्धविपक्षावृत्तिसाधनात् ॥ ४७ ॥
किं च पश्यत्ययं सर्वमिन्द्रियापेक्षया न वा ।
सर्वज्ञो नादिमे पक्षे यन्नातीन्द्रियभाववित् ॥ ४८ ॥
पक्षान्तरेऽपि सर्वज्ञाः स्युरन्धबधिरादयः ।
इति चेत्तदसद्येनाभ्युपागमपराहतम् ॥ ४९ ॥
किं च ज्ञानं न सर्वज्ञविज्ञानत्वाद्यथा तव ।
नेदं सम्यगिहोपाधिर्यज्ज्ञानाचरणोदयः ॥ ५० ॥
प्रागभावं यदि ब्रूषे प्रध्वंसाभावमस्य वा ।
पश्चात्पूर्वं तदस्ति त्वं सर्वज्ञस्य न वेत्सि किम् ॥ ५१ ॥
अस्येतरेतराभावे सत्त्वं कुम्भेभयोरिव ।
स्यान्नात्यन्तमभावोऽपि सतोऽनुमानतोऽमुतः ॥ ५२ ॥
अस्त्यतीन्द्रियविज्ञेयः साक्षात्कारीह कश्चन ।
चन्द्रार्कग्रहणादीनामालिङ्गाद्युपदेशतः ॥ ५३ ॥
तथोपदेशको यत्र यः साक्षात्कुरुते स तम् ।
अस्मदादिर्यथा स्वानुभूते भावे तथा च सः ॥ ५४ ॥
प्रमाणपञ्चकेत्यादिहेतुर्मो(र्मू)लांशतस्ततः ।
स्वरूपासिद्धिमध्यास्ते शलभोऽग्निशिखामिव ॥ ५५ ॥
सर्वज्ञे संशयः प्राप्तः साधकं बाधकं विना ।
मानं त्वयेति नाशङ्क्यं मदुक्तव्यक्तयुक्तितः ॥ ५६ ॥
अथ ब्रूषे निराकारं ज्ञानं सर्वविदो यदि ।
तत्तदाकारशून्यत्वान्नाप्यर्थग्रहणे प्रभुः ॥ ५७ ॥

निजाकारेण साकारे तत्र नार्थावभासनम् ।
प्रसज्येत पराकारदरिद्रं तद्यतो मतम् ॥ ५८ ॥
अथार्थैरर्पिताकारे तत्र विश्वस्य शून्यता ।
प्रसज्यते ततो ज्ञानं तत्र गोचरयत्वदः ॥ ५९ ॥
अर्थैः समर्पिताकारैरनन्तैस्तत्समाकुलम् ।
सजातीयविजातीयभेदनिर्ना(र्णा)यकं कथम् ॥ ६० ॥
अत्रोच्यते त्वयोद्दिष्टा दोषा ज्ञाने हि कोऽपि न ।
अर्थग्रहणरूपेण परिणामि हितं मतम् ॥ ६१ ॥
ततोऽनन्तस्वभावत्वादनन्तार्थोपलम्भकम् ।
ज्ञानं सिद्धमितः सिद्धिः सर्वज्ञस्येति मन्यताम् ॥ ६२ ॥
निर्जिते मुनिना वादे निग्रहस्थानमागतः ।
निर्भर्त्स्य मत्सरी राज्ञा स ततो निरकास्यत ॥ ६३ ॥
प्रशशंस विशामीशस्ततस्तं वादिनं मुनिम् ।
इत्थं प्रभावना जज्ञे त्वत्तोऽद्य जिनशासने ॥ ६४ ॥
विकल्पजालकल्लोलैर्जल्पकल्लोलिनीपतौ ।
पातालप्रणयिन्यत्र धीरभूत्तस्य वादिनः ॥ ६५ ॥
मुनेऽद्य मौनमुद्रास्ये वैलक्ष्यं वास्य वादिनः ।
ददे त्वयाददे वाशु जल्पकौशलजं यशः ॥ ६६ ॥
अथ विद्याधरः कश्चिदवतीर्य विमानतः ।
मुनिं नत्वा नृपं चास्य व्यजिज्ञपदतिप्रियम् ॥ ६७ ॥
योऽपजह्रे सुतस्तेऽसौ वैताढ्यं सानुकूलया ।
चक्रे देवतया राजकन्येशश्चक्रवर्त्यपि ॥ ६८ ॥
सोऽयमायाति भूमीन्द्र प्रसाध्य जगतीमिह ।
**जयन्तः** स्वभुजप्राप्यशौर्यनिर्जितशात्रवः ॥ ६९ ॥
सुरस्रोतस्विनीस्रोतः स्रुतं वारीव शीतलम् ।
राज्ञोऽथ तद्वचोऽपास्य तापं पुत्रवियोगजम् ॥ ७० ॥

अभूदवीचिभिः स्नातः सस्नेहं सुतवार्तया ।
दिदृक्षुरक्षिपच्चक्षुस्तं ततः स नभस्तले ॥ ७१ ॥

आययौ खेचरश्रेणिचक्रवर्तिश्रियः प्रियः ।
विमानैः पूरयन्नाशा मुदा च नयने पितुः ॥ ७२ ॥

जिनेन्द्रमिव देवेन्द्रः समुत्तीर्य विमानतः ।
नमश्चक्रे नमस्यार्हं श्रीजयन्तो गुरुं ततः ॥ ७३ ॥

आश्चर्यैकपदैर्गुणैस्त्रिभुवने भ्राम्यद्यशःसौरभै-
स्तैस्तैरभ्युदयैरसी····सुकृतप्रागल्भ्यलभ्यैर्भृशम् ।
दिग्यात्रासु जयैश्च तस्य जनको नारञ्जि राजा तथा
श्लाघ्यैः श्रीजिनधर्मकर्मभिरपि प्रीत्या गृहीतैर्यथा ॥ ७४ ॥

पितुः स विद्याधरचक्रवर्ती सुश्रावकत्वेन गुणी गुणेन ।
तदा कुमारोऽपि मुदम्बुपूरैः समुद्रमुद्रां बिभरांबभूव ॥ ७५ ॥

मुखालोकैः प्रौढप्रणयसुभगैस्तस्य सुगुरोः
कृतार्थीकुर्वाणो नयननलिने भूपतिरथ ।
पदोरर्चां कृत्वा मणिमुकुटदीप्तांशुकुसुमै-
रलंचक्रे शक्रानुज इव विभूत्या स सदनम् ॥ ७६ ॥

सर्वत्र क्षितिमण्डले क्षितिधवैः श्रीविक्रमक्ष्मापते-
रादेशेन विनिर्मिताद्भुततमा जैनेन्द्रहर्म्यावलिः ।
उन्मीलन्मणिकिंकिणीक्वणमिषादाख्यातुमभ्युद्यते
वाभादद्भुतपुण्यकीर्तिपटला कान्ता प्रभुत्वाश्रया ॥ ७७ ॥

इति श्वेताम्बरश्रीमदभयदेवाचार्यविरचिते जयन्तविजयनाम्नि महाकाव्ये श्रीशब्दाङ्के नरेन्द्रसम्यक्त्वप्रतिपत्तिवर्णनो नाम पञ्चदशः सर्गः ।

---

षोडशः सर्गः ।

अन्यदा सदसि राजशासनाद्वेत्रिणा सपदि संप्रवेशितः ।
विक्रमक्षितिपतेः पुरः पुमान्कश्चिदेवमवदत्कृताञ्जलिः ॥ १ ॥

अस्ति **हास्तिनपुरं** [1]भवसुराम्नातिदूरभुवि देव विश्रुतम्।
येन दक्षिण[दि]गङ्गनामुखाम्भोरुहे तिलकचारुता दधे॥ २॥
चन्द्रकान्तमणिसान्द्रकान्तिभिर्यज्जिनेन्द्रसदनैर्मनोरमैः।
स्वं पुरीमिव हसत्यनुक्षणं गोत्रभिद्विहितनीतिसंपदम्॥ ३॥
यत्र वेदमुखरा द्विजातयः सप्तमीं भवनभूमिमाश्रिताः।
संवदन्ति निजवासनोद्धतं कुम्भजन्ममुनिना सहान्वहम्॥ ४॥
पालयत्यवनिपालमण्डलीमौलिलालितपदस्तदद्भुतम्।
**वैरिसिंह** इति वैरिसुन्दरीलोचनाञ्जनतमिस्रभास्करः॥ ५॥
स्फारपुष्करकदम्बचुम्बिता यस्य खड्गलतिका कराम्बुजे।
युद्धनाशितहतावनीभृतानामवर्णवहिकाश्रियं दधे॥ ६॥
भाग्यसंपदिव पुष्पधन्वनः सृष्टिसारमिव पद्मजन्मनः।
तस्य देव कमलेव वारिधेरद्भुतास्ति **रतिसुन्दरी** सुता॥ ७॥
तत्स्वयंवरविधानकौतुकोत्साहदर्शनसमीहया नृपः।
रूपयौवनमदाभिमानिनः सर्वतः क्षितिपतीनजूहवत्॥ ८॥
किंतु सन्तु शतशः परे नृपा रूपसंपदधिकाभिमानिनः।
**श्रीजयन्त**मपहाय नापरस्तन्मनोन्तरधिकं विजृम्भते॥ ९॥
वाचमेवमवनीपुरंदरः सुन्दरामथ निपीय सादनम्।
तत्क्षणं कृतयथोचितक्रियं राजदूतमवदत्प्रमोदतः॥ १०॥
इत्थमस्ति यदि दूत नूतनस्नेहमोहितमना महीपतिः।
**श्रीजयन्त**मवलम्बितक्रमं प्रेषयामि सममेव तत्त्वया॥ ११॥
संमतेन निजगोत्रमन्त्रिणां वासरेऽभ्युदयशंसिनि द्रुतम्।
**श्रीजयन्त**मथ स व्यसर्जयद्भूरिसैन्यभरभङ्गुरावनिम्॥ १२॥
दुन्दुभिध्वनिभरेण रोदसीं पूरयन्नपरिमेयविस्तरः।
सोऽचलद्दलविमर्दरेणुभिर्दर्शयन्नहनि दर्शयामिनी॥ १३॥
अध्वनि प्रतिदिनं स नूतनैः कौतुकैस्तरललोचनाञ्चलः।
वासरैः परिमितैरपि द्रुतं प्राप **हास्तिनपुरं** नरेश्वरः॥ १४॥

---

१. 'भवे सुराण्ना' इति पाठे सुराट् संबोधनम्.

तं समागतमवेत्य पूरुषैर्वैरिसिंहनृपतिः प्रमोदतः ।
संमुखं निखिलसैन्यसंचयन्यञ्चितावनितलस्तदाचलत् ॥ १५ ॥
उत्सहिष्णुहृदयौ समन्ततस्तत्र तौ क्षितिपती वितेनतुः ।
····वितीमथ मिथः प्रथीयसा गौरवेण गुणरत्नरोहणौ ॥ १६ ॥
भूपतिस्तदनु भूरिसत्कृति प्रीतिमप्रतिमरूपसंपदम् ।
श्रीजयन्तयुवराजमादरा[दा]निनाय निजमुद्ध्वजं पुरम् ॥ १७ ॥
भूरि पौरजरतीकरक्षरल्लाजलाञ्छितशिरः शिरोरुहः ।
तत्र सत्वरनरेन्द्रदर्शिते वेश्मनि स्मितमुखः स तस्थिवान् ॥१८॥
हर्षनिर्भरमहीभृदाहृतातिथ्यसुस्थितवपुः परि········ ।
··········································दः ॥ १९ ॥

बन्दिवृन्दनिनदेन बोधितः प्रातरेव कृतदेवतार्चनः ।
तत्स्वयंवरविधानमीक्षितुं तत्क्षणादकृत स प्रसाधनम् ॥ २० ॥
दिव्यभूषणगणैः स भूषितः कान्तिचक्रकृतशक्रकार्मुकैः ।
[कां]चन श्रियमवापदद्भुतां दाहतः प्रथममङ्गजो यथा ॥ २१ ॥
रूपसंपदनुरूपमण्डनाडम्बराहितमहाकुतूहलः ।
तत्स्वयंवरसमाहृताखिलक्षोणिपालमगमत्सभाङ्गणम् ॥ २२ ॥
तत्र चित्ररचनामनोहरं काञ्चनोपचितमञ्चमुच्चकैः ।
आरुरोह स नरेन्द्रदर्शितं तुङ्गभूधरमिवाशु केसरी ॥ २३ ॥
विस्फुरत्यथ स दक्षिणेक्षणे पाणिपीडनविधानशंसिनि ।
पूर्वभूधरतटीमिवार्यमा हेमविष्टरमलंचकार च ॥ २४ ॥
भूभृतः सदसि तस्य भूषणोद्भासिरत्नमुकुरेषु बिम्बितः ।
रूपसंपदपहस्तिता क्षणादाश्रितास्तमिव सेवनेच्छया ॥ २५ ॥
यैः पुरा स्फुरदुरुप्रभाभराद्राजभिः सदसि भास्करायितम् ।
श्रीजयन्तयुवराज्यसंनिधौ ते दधुर्दिनविधूपमेयताम् ॥ २६ ॥
तत्र पौरनिकरेषु कौतुकोत्तानलोचनपुटेष्वनुक्षणम् ।
मागधेषु निजबुद्धिवर्धितोद्दामकाव्यरचनाभिधायिषु ॥ २७ ॥

१. 'निन' इति स्यात्.

उल्लसत्यगुरुसौरभे जनघ्राणतर्पणविधौ पटीयसि ।
मूर्छति प्रतिपदं च दुन्दुभिध्वानमांसलितशङ्खनिस्वने ॥ २८ ॥
गीतमङ्गलकुतूहलोन्मुखे भूरिपौरयुवतीकदम्बके ।
स्वाचितासननिवेशदर्शितप्रीतिषु क्षितिवधूविलासिषु ॥ २९ ॥
सान्द्रचन्द्रकरसोदराम्बरा चारुचन्दनतरङ्गसंगता ।
मूर्तिमत्युदितवक्त्रवारिजा स्वर्धुनीव कुचचक्रशालिनी ॥ ३० ॥
अङ्गसंगतिविचित्रभूषणोद्गीर्णकान्तिकृतशक्रकार्मुका ।
उत्तमद्गुरुपयोधरोद्धुरा मेघकालकमलेव जङ्गमा ॥ ३१ ॥
श्रोणिबिम्बकुचकुम्भगौरवान्माशु गच्छतु रसा रसातलम् ।
दानमेदुरमतङ्गसालसं मन्थरां गतिमितीव तन्वती ॥ ३२ ॥
चक्रभृत्करधृतस्वयंवरोद्दामदामनि निविष्टलोचनाम् ।
गन्धलुब्धमधुपाङ्गनाथ···· ध्वानमत्सरभरादिवानिशम् ॥ ३३ ॥
कामिनीजननिसर्गसज्जया लज्जया विनतचक्त्रवारिजा ।
वाञ्छिताभिनवभर्तृदायिनः कुर्वतीव नतिमङ्गजन्मनः ॥ ३४ ॥
आविरास रसनागुणक्वणत्किङ्किणीनिकरबोधितस्मरा ।
वैरिसिंहनरनाथनन्दिनी नन्दिनी निखिलभूपचक्षुषाम् ॥ ३५ ॥

(कुलकम्)

भासयत्युरु सभा नभोऽङ्गणं तां जयन्तयुवराजभास्करे ।
चेतसापि विजहुः क्षितीश्वरा वासरश्रियमिवांशुतारकाः ॥ ३६ ॥
व्यालिलेख मुहुरङ्घ्रिणा महीं सा चकर्ष भृशमंशुकाञ्चलम् ।
श्रीजयन्तयुवराजदर्शने कारिता किमु न पुष्पधन्वनः ॥ ३७ ॥
एतदीयवदनेन्दुदर्शनादुत्तरङ्गगुरुरागसागराः ।
चेष्टितानि विदधुर्वसुंधराधीश्वराः सदसि ते स्मरोद्धतम् ॥ ३८ ॥
प्राप्तरेखमखिलेषु भूभुजां भूषणेषु निजहारमुज्ज्वलम् ।
उन्नतेन हृदयेन सर्वतः कोऽप्यदर्शयदखर्वगर्वतः ॥ ३९ ॥

---

१. 'न्न' इति स्यात्.

हन्ति पञ्चभिरपीषुभिः स्मरो मां तदेनमभिहन्मि हेलया ।
कोऽप्यभाषत नृपः कृपाणिकावल्गुवल्गनमितीव सूचयन् ॥४०॥
नागवल्लिदलवीटिकामिषादङ्गुलीरिव मुखे विनिक्षिपन् ।
कोऽप्यलक्ष्यत पतिंवरेच्छया मन्मथस्य पुरतः क्षितीश्वरः ॥ ४१ ॥
अङ्गुलीयमणिदर्पणे महत्येणनाभितिलकं न्यभालयत् ।
कोऽपि भूपदुहितुः समीहयेवाक्षरावलिमलीकसंगताम् ॥ ४२ ॥
पाटवं वचसि नाटयन्मुधा मीनलाञ्छनगुरोर्निदेशतः ।
नव्यकाव्यरचनासु चातुरीं कोऽप्यदर्शयदुदारदर्शनः ॥ ४३ ॥
संभ्रमाद्विवृतमीक्षणाम्बुजं कोऽप्यधत्त वसुधापुरंदरः ।
पातुमेकसमयं नृपाङ्गजारूपसंपदमृतच्छटा इव ॥ ४४ ॥
कीर्तनं विशतु मा स्म कन्यका काङ्क्षिणामपरभूभृतामिव ।
अङ्गुलीकिसलयेन कश्चन श्रोत्रसंपुटमिति व्यघण्टयत् ॥ ४५ ॥
व्यालिलेख सदसि क्रमाङ्गुलीपल्लवेन तपनीयविष्टरम् ।
तत्र सुप्तमधिकं परिश्रमाद्बोधयन्निव झषध्वजं पुरः ॥ ४६ ॥
बन्दिवृन्दनिनदं स संमदां संनिरुध्य मधुरोद्धतध्वनिः ।
भूपतीन्विदितवंशविक्रमान्वेत्रभृत्क्रमवशादकीर्तयत् ॥ ४७ ॥
शंभुशैलमभिमानलीलया वामपाणिकमले निधाय यः ।
आचकाङ्क्ष किल दक्षिणे करे कर्तुमुच्चम····राचलं बली ॥ ४८ ॥
पुष्पलावमवलूय मस्तकानर्चयत्यसमविक्रमे क्रमान् ।
यत्र तद्गुणवरं विलोकयन्नाकुलः समभवत्त्रिलोचनः ॥ ४९ ॥
तं सुरासुरसमाजरावणं रावणं रणधुरीणविक्रमम् ।
प्रेतभर्तुरतिथिं वितन्वता येन शान्तिकमतन्यत क्षितेः ॥ ५० ॥
तस्य मैथिलसुताविलासिनो राम इत्यनघनामशालिनः ।
अन्वये शशिमुखि क्षणं पुरः पश्य भूपमनुरूपवैभवम् ॥ ५१ ॥
एतदङ्कशयनीयशायिनी नेत्रनीलनलिनावलोकनैः ।
राघवान्वयपुरीं निरन्तरं त्वं कृतार्थय कुरङ्गलोचने ॥ ५२ ॥

तं निरूप्य नृपतिः पतिंवरा किंचिदञ्चितपुटेन चक्षुषा।
अत्र रागविमुखादिति······ ······व्युत्ससर्ज फणिवल्लिपल्लवान्॥ ९३॥
क्षोणिवल्लभमथापरं पुरः स्मेरकैरवसमानलोचनम्।
वेत्रभृन्मृगदृशो वशीकृतास्तोकराजकमदर्शयद्द्रुतम्॥ ९४॥
यत्प्रतापतपनोपतापितैः कौशिकैरिव जवादरातिभिः।
नामसाम्यमधिगम्य भूभृतां कन्दरासु परिकल्पिता स्थितिः॥ ९५॥
सैष चन्द्रमुखि वेदनायकः सायकाम्बुशमितारिपावकः।
अस्ति तेऽत्र यदि नेत्रकौतुकं तद्वृणीष्व विषयाभिलाषिणि॥ ९६॥
रूपवत्यपि गुणैकभाजने तत्र सा समभवत्पराङ्मुखी।
प्रेमपूर्वजनुरर्जितं क्वचिज्जायते हि किमिवात्र कौतुकम्॥ ९७॥
संमुखं सपदि वेत्रधारिणा तामथान्यनृपतेर्निनाय सा।
हंसिकामिव तरङ्गपद्धतिः पङ्कजादपरपङ्कजं क्षणात्॥ ९८॥
सिन्धुरोधसि यदीयसिन्धुराः संचरन्ति मदवारिदुर्धराः।
सांयुगीननिजशौर्यचर्यया दिग्गजानिव विजेतुमूर्जितान्॥ ९९॥
उज्जयन्यधिपतेस्तनूद्भवः सोऽयमद्भुतविलासमन्दिरम्।
पाणिपीडनविधाविहाधुना मन्त्रिकर्मणि तवाशु मन्मथः॥ ६०॥
विस्फुरत्तरलमीननेत्रया चक्रयुग्मकुचकुम्भशोभया।
राजहंसगतयाब्जहस्तया सख्यमस्तु तव देवि सिप्रया॥ ६१॥
एवमाहितुरसापि सा दधे नाभिलाषमपि तत्र भूपतौ।
सौकुमार्यरसिका कुमुद्वती भास्वतीव महसां समाश्रयौ॥ ६२॥
तामथापरमहीमहेश्वरस्याभिमुख्यमनयन्मृगेक्षणाम्।
नीतियुक्तिरिव भाग्यशालिनः संपदं सपदि वेत्रधारिणी॥ ६३॥
यत्तुरङ्गखुरपातदारितक्षोणिरेणुनिकरेऽम्बरस्पृशि।
धातुरिष्टपरिमाणसंग्रहव्यग्रहाजनि चिरात्परिग्रहे॥ ६४॥
सोऽयमङ्गनृपतिः सुराङ्गनागीयमानभुजदण्डविक्रमः।
दृष्टिरस्तु तव देवि साक्षिणी सन्निवेशविधयेऽत्र चेतसः॥ ६५॥

भारती वसति वक्र..........................वारिधेः सुता ।
अस्य चाङ्कमधिगम्य निर्मलं त्वं तयोर्भव शुभे तृतीयका ॥ ६६ ॥
तामनादरवतीमिहाधिकं सावितर्क्य सुकुमारया गिरा ।
अन्यमुन्नतभुजं महीभुजं ख्यातकीर्ति...........द्रुतम् ॥ ६७ ॥
शिश्रिये निशितशस्त्रघट्टनप्रोच्छलच्छिखिशिखामिषेण यः ।
संभ्रमाद्युधि जयश्रिया हरे व्यत्ययादिव वसानयांशुकम् ॥ ६८ ॥
भस्मसात्कृतमवेत्य मन्मथं मन्मथारिनयनोत्थतेजसा ।
भूप एव तमिवाधिकद्युति यं व्यधत्त विधिरद्भुतावधिम् ॥ ६९ ॥
सोऽयमब्जनयने ककुब्जये कुब्जतामहिपते करोति यः ।
कन्यकुब्जनृपतिश्चमूभरैर्नेत्रपङ्करुहगोचरोऽस्तु ते ॥ ७० ॥
क्षेप्तुमस्य शिरसीव तत्क्षणं पादपद्ममुदपातयत्........ ।
गन्तुमन्तिकमसौ समुत्सुका श्रीजयन्तनृपतः समीहितम् ॥ ७१ ॥
यानपास्य नृपतीन्पतिंवरा सा जगाम गुरुकामविह्वलान् ।
ते तयाञ्जनघनैर्विलोचनैः श्यामतां दधुरिवाक्षमेक्षिताः ॥ ७२ ॥
सा विहाय नृपतीनथाजनि श्रीजयन्तमभि भूपतेः सुता ।
नाकिनोऽनुपमरूपसंपदः श्रीर्मुकुन्दमिव मन्थनेऽम्बुधेः ॥ ७३ ॥
तत्र चित्रितजगत्त्रयाधिकं सानुरागमनसं विशङ्क्य ताम् ।
वेत्रभृत्तदनु तापमुच्चकैरभ्यधत्त मधुराक्षरामिति ॥ ७४ ॥
यत्करेऽरिकरिकुम्भभेदनोन्मुक्तमौक्तिकभरेण दन्तुरः ।
भात्यसिः समिति वीक्ष्य नश्यतः सत्त्वरानुपहसन्निव द्विषः ॥७५॥
विष्टपत्रयजयैकधुर्यया निर्जितः स्वभुजशौर्यचर्यया ।
कुण्डलाख्यविबुधो मदोद्धतोऽप्याशु दास्यमभजद्यदग्रतः ॥ ७६ ॥
जैनजैत्रभुजशालिना प्रजा पालिताभ्यधिकऋद्धिवृद्धिभिः ।
निन्दति स्म मरुतामपि श्रियं सोऽस्ति विक्रम इति क्षितीश्वरः ॥७७॥
संमुखः सखि स एष शोषितद्वेषिपङ्कनिकरः स्वतेजसा ।
उल्लसन्निजकुलैकभास्करः श्रीजयन्त इति तत्तनूद्भवः ॥ ७८ ॥

उच्छलत्प्रबलपक्षशालिनाप्याधिमुख्यमुपगम्य चापलात् ।
यत्प्रतापदहनेऽतिदुःसहे **सिंहलेन** शलभायितं युधि ॥ ७९ ॥
सिंहलीवदनचन्द्रचन्द्रिकां सिंहिकासुत इवासि भीषणः ।
यस्य बाहुरसहिष्ट विष्टपानिष्टलुण्ठनपटुर्न संगरे ॥ ८० ॥
खेचरेशमतिदुःसहैः शरैः कुर्वतापि नृपतेः कुटुम्बिनम् ।
चक्रवर्तिपदसंपदात्मसाद्येन राजतगिरो व्यधीयत ॥ ८१ ॥
यश्चकार शरधोरणिक्षतान्खेचरान्समिति भूमिगोचरान् ।
तद्वधूनयनबाष्पबिन्दुभिः सार्धमुद्र····ति पुरः पुरः स्मरान्(?) ॥८२॥
आदिकोलकुलशैलकच्छपाम्भोधिभोगिपतिदिग्मतङ्गजाः ।
सन्ति संप्रति चिरात्सुखोन्मुखा भारमुद्धरति यद्भुजे भुवः ॥८३॥
चन्द्रमाः शशमलीनसच्छविस्तापकृत्तरणिरुग्रतेजसा ।
तन्न किंचिदसृजद्विधिश्चिरादस्य येन मुखमेति तुल्यताम् ॥ ८४ ॥
कस्य तस्य सखि भूपसंपदं स्तोतुमेति रसना समर्थताम् ।
यस्य विश्वजनतातिशायिनो मन्मथेन तुलनापि लाञ्छनम् ॥८५॥
कौशलेन कलया कुलेन च त्वं तमेनमनुरूपमात्मनः ।
एहि मुग्धहृदये वृणु द्रुतं रोहिणीव हरिणाङ्कमुत्सुका ॥ ८६ ॥

आकर्ण्य कर्णमधुरामिति वाचमुच्चैः
किंचित्त्रपामरमपास्य नरेन्द्रपुत्री ।
मालां स्वयंवरमहोत्सवसाक्षिणीं तां
**श्रीमज्जयन्तनृपतेः** क्षिपति स्म कण्ठे ॥ ८७ ॥

अंसदेशनिहितामथ मालां तां दधन्नरपतिर्विरराज ।
शेषभूमिपतिकीर्तिपताकामाहितामिव मनोभवभर्त्रा ॥ ८८ ॥

उद्गच्छद्गुरुमत्सरोद्धुरधियोऽप्यन्येऽथ पृथ्वीभुज-
स्तत्राशङ्क्य **जयन्त**खेचरपतिं दुर्जेयमाजिक्रमे ।
मन्दं मन्दमपत्रपाभरभवन्नीचैर्दृशः प्राभृता-
न्यादायाधृत **वैरिसिंह**विहितान्यासत्प्रतीपंगमा ॥ ८९ ॥

सम तया भूमिपतेस्तनूजया जयन्तभू(?)तत्सपरिच्छदः सदः ।
कुतूहलोत्तालपुरंध्रिमङ्गलैर्महोत्सवं मांसलयन्नथाचलत् ॥ ९० ॥

अद्य श्रिया हरिरभाजि विराजतेऽद्य
पाथोपतिः सुरतरङ्गवतीसनाथम् ।
देवी शिवा प्रणयिनं हरमद्य लेभे
पुष्पायुधं रतिरवाप किलाधुनैव ॥ ९१ ॥

सफलतामधुनैव हि वेधसः श्रमभरोऽपि जगाम विदारयम्(?) ।
यदनुरूपवरेण समागमः समजनि स्मितपङ्कजचक्षुषः ॥ ९२ ॥

पौराणामित्थमभ्यर्णे कर्णे कुर्वन्गिरः पथि ।
मन्दिरं मङ्गलोद्भासि सोऽथ प्राप महीपतेः ॥ ९३ ॥

(त्रिभिर्विशेषकम्)

हर्षोत्कर्षाद्द्रुतमुभयतः संगताभिर्वधूभिः
स्पर्द्धाबन्धादधिकरुचिरे कृत्यजाते कृतेऽथ ।
लग्ने सौम्यग्रहबलयुजि स्वानुभावानुरूपं
तस्मिन्नुर्वीपतिदुहितरं पर्यणैषीज्जयन्तः ॥ ९४ ॥

प्रमोदनटनत्रुटत्पणपुरंध्रिहारावली-
र्गलत्तरलमौक्तिकैः पथि चतुष्कमापूरयन् ।
ततोऽभिनववल्लभामवनिवल्लभः सादरं
हरिः श्रियमिवानयन्निजनिकेतमुत्तोरणम् ॥ ९५ ॥

अनुभवन्ननया सह भूपतिस्तदनु वैषयिकीं श्रियमद्भुताम् ।
कतिपयान्दिवसान्पितृदर्शनोत्सुकमना अपि तत्र निनाय सः ॥९६॥

इति श्वेताम्बरश्रीमदभयदेवाचार्यविरचिते जयन्तविजयनाम्नि महाकाव्ये
श्रीशब्दाङ्के स्वयंवरवर्णनो नाम षोडशः सर्गः ।

---

## सप्तदशः सर्गः ।

अथ श्रिया निर्जितवैजयन्तं श्रीमज्जयन्तो जगदेकवीरः ।
अध्यारुरोह प्रियया तयेन्द्रः शच्येव सार्धं सविलाससौधम् ॥ १ ॥

सर्ग······त································································ ।
································································································ ॥ २ ॥

········केन प्रमदाकुलानां कर्णामृतैर्वाग्मिगिरां विलासैः ।
श्रीवैरिसिंहेन विधीयमानयथोर्चितार्चस्य दिनानि यान्ति ॥ ३ ॥

परेद्यवि श्रीरतिसुन्दरीदं[1] प्राणप्रियं विज्ञपयांबभूव ।
उल्लासयन्ती दशनांशुजालैः सा मीनकेतोरिव वैजयन्ती ॥ ४ ॥

कस्माद्विमुच्यान्यनरेन्द्रवृन्दं त्वां तूर्णमेवावृणवं सहेलम् ।
आद्यावलोकेऽपि च तेऽवनीश दिवामणेरम्बुजिनीव जाता ॥ ५ ॥

विद्याधराणामधिपः स विद्यादेव्या मुखेनोत्तरयांबभूव ।
प्रियप्रियालापसुधावसेका·········दिवाङ्गपुलकाङ्कुरश्रीः ॥ ६ ॥

उवाच सा पूर्वभवे भवस्य स्निग्धा भवानीव सधर्मिणीयम् ।
बभूव तेऽत्रापि ततोऽनुरागात्स्वभ्यस्तमभ्येति भवान्तरेऽपि ॥ ७ ॥

तथाहि यस्यां कुचकुम्भचक्षुर्नीलोत्पलास्येन्दुनितम्बबिम्बैः ।
स्त्रैणं चकाशे चतुरङ्गसैन्यैरिवोल्बणैः पञ्चशरस्य राज्ञः ॥ ८ ॥

श्रीस्वस्तिमत्यां पुरि तत्र भूभृद्बभूव वज्रायुधनामधेयः ।
हेलाहतानम्रनरेन्द्रकान्तानेत्राम्बुसंवर्धितवारिराशिः ॥ ९ ॥

आसीच्च तत्रैव समुद्रदत्तः कैलानदीष्णोऽपि[2] सदा दरिद्रः ।
स्वपूर्वकर्मस्फुरितानुसारं शुभाशुभं देहभृतां फलं हि ॥ १० ॥

स कुन्तली कुन्तलभासि पक्षे दिने दिने चन्द्रिकया च चन्द्रः ।
संपूर्णभिक्षाविरहे तदोच्चैः क्षीणः सपत्न्या सह कान्तिमत्या ॥ ११ ॥

एकातपत्रेऽपि सुभिक्षराज्ये वदान्यताभाज्यपि तत्र लोके ।
सुदुर्लभा तस्य बभूव भिक्षा क्व मन्दभाग्यस्य समीहितं वा ॥ १२ ॥

गृहे गृहे तत्र समं सपत्न्या बभ्राम भिक्षामपि मुक्तमानः ।
दुष्पूरसीमोदरपूरणाय प्राज्ञोऽपि दुष्कर्म करोति किं न ॥ १३ ॥

निरन्तरासह्यदुरन्तदुःखदारिद्र्यमुद्राज्वरजर्जिताङ्गौ ।
तौ दम्पती जीवितनिर्व्यपेक्षौ शैलं समारोढुमथ प्रवृत्तौ ॥ १४ ॥

१. 'दं' इति भवेत्. २. सर्वासु कलासु चतुरोऽपि दरिद्रः

तमालतालीवनराजिनीलः कालाग्निधूमः किल कौतुकीव ।
यद्व्याजतः पूरितरोदसीको निर्गत्य भूभागमलंचकार ॥ १५ ॥
तङ्गत्तरङ्गैः सरितां प्रवाहैर्मही यदीया सततं चकास्ति ।
वामभ्रुवामुच्चकुचस्थलीव स्फुरत्प्रभैर्मौक्तिकहारिहारैः ॥ १६ ॥
तस्मिन्तपस्यन्नथ साधुरैक्षि न्यस्तार्कदृष्टिर्विहितोर्ध्वबाहुः ।
हस्तावलम्बाय शिवोन्मुखानां भवाम्बुधौ पातभियेव ताभ्याम् ॥ १७ ॥
महात्मनो दुष्करकारिणोऽस्य पादप्रणामः खलु शम्बलं नौ ।
प्रेत्य प्रयाणेऽस्त्विवति दध्यतुस्तौ हृद्यं हृदम्भोरुहि भावि भद्रम् ॥ १८ ॥
श्रीमन्मुनिं तन्मिथुनं ववन्दे हर्षप्रकर्षोद्धुषिताङ्गयष्टिः ।
सधर्मलाभेन ततः कृताशीरादत्तदा तत्र कृतोपयोगः ॥ १९ ॥
मुक्ताफलं न्यस्तमिव स्वहस्ते ज्ञानेन निर्णीय तयोः स्वरूपम् ।
आलापयद्भद्र न भद्रमेतत्प्राणं प्रहाणं युवयोरिहैवम् ॥ २० ॥
निन्द्यं बुधैरात्मवधं विधत्ते कथं सुधीरप्यधमत्वधाम ।
न चामुतः किंचिदपैति दुःखं व्याधिः कुपथ्यादिव वर्द्धते तु ॥ २१ ॥
जलाञ्जलिं दित्ससि चेन्निजानां दुष्कर्मणां दुःखशतप्रदानाम् ।
समीहितार्थौपयिकं तदेकं सुपात्रदानं कुरु भिक्षयापि ॥ २२ ॥
अङ्गीचकारेति गुरूपदेशं कल्पद्रुमस्येव फलं बुभुक्षुः ।
ततः प्रमाणं कृतपूर्व्यपूर्वभक्त्या पुरस्तन्मिथुनं प्रतस्थे ॥ २३ ॥
प्रायेण विद्वज्जनमण्डलीव समन्ततो निर्जलतां तनोति ।
या ब्रह्मशापप्रहतेरिवोच्चैर्विनाकृता स्वादुफलैर्द्रुमौघैः ॥ २४ ॥
यादोभिरुग्रैरिव वारिराशिर्या श्वापदैर्हिंस्रतरैः कृतार्तिः ।
दुर्लक्ष्यमार्गा गहनैस्ततस्तां भीमाटवीं तन्मिथुनं विवेश ॥ २५ ॥
तौ प्राणसंदेहदशामसह्यां तत्रानुभूयाथ तृषाक्षुधार्तौ ।
सत्त्वादलङ्घ्यामपि तां विलङ्घ्य श्लाघ्यं पुरं प्रापतुरिभ्यलोकैः ॥ २६ ॥
बम्भ्रम्यमाणं मिथुनं श्लथाङ्गं तत्राथ भैक्षाय तदा तदाप ।
संपूर्णमिष्टं च कुतोऽपि दातुः स्थले तृषार्तो जलदादिवाम्भः ॥ २७ ॥

दु:स्थामवस्थामपि जग्मिवांसौ कृच्छ्राप्तभिक्षामभिभोक्तुकामौ।
तौ दम्पती तत्र जलाशयान्ते स्थानं ततः शीतलमाश्रयेताम् ॥ २८ ॥
मासोपवासादितपोविशेषैस्त्वगस्थिशेषाङ्गमनङ्गरूपम्।
तस्मिन्पुरे पारणकाय यान्तं तौ दृष्टवन्तौ सुकृती मुनीन्द्रम् ॥ २९ ॥
सुदुर्लभं सर्वरसप्रशस्यं त्रिलङ्घनान्ते ददतस्तदन्नम्।
मुनेस्तदा सर्वमखर्वभावो किं दुष्करं धर्मधनस्पृहां हि ॥ ३० ॥
तद्दानतस्तौ परमप्रकर्षप्रमोदपीयूषविशेषपानैः।
अवेदनाज्ञौ स तृषः क्षुधोऽपि सुखं शिवस्येव तदान्वभूताम् ॥ ३१ ॥
राजन्समागत्य सुरः सुदृष्टिर्मुनीन्द्रभक्त्याथ तयोरुपान्ते।
विद्युत्प्रभाभासुरकायकान्तिर्विद्युत्प्रभाख्योऽभिदधे सितास्या ॥ ३२ ॥
अहो महादानमिदं तवाभूच्छ्रीमन्मुनेस्तीव्रतपोऽवसाने।
महाद्रुमस्येव घनाघनाम्भः संभारवृष्टिः शुचितापशेषे ॥ ३३ ॥
यद्दुष्करं दुष्करकारिणेऽस्मै विश्राणनं त्वत्करपङ्कजेन।
सुपात्रदानानुगुणेन तेन त्वयि प्रसन्नोऽस्मि **समुद्रदत्त** ॥ ३४ ॥
विधेहि वाग्गोचरसंवरिष्णुः स्ववाञ्छितं तद्विदधामि येन।
एवं हि मे नृत्यतु दानधर्मानुमोदनालक्षणपुण्यलक्ष्मीः ॥ ३५ ॥
कृताञ्जलिर्वीक्ष्य ससंभ्रमस्तं व्यजिज्ञपत्सोऽपि विनम्रमौलिः।
सुदुर्लभं श्रीजिनशासनं यल्लेभे मया तत्किमितोऽर्थनीयम् ॥ ३६ ॥
तथापि सा धार्मिकवत्सलानां प्रभावसौभाग्यतरङ्गितानाम्।
प्रसादवाक्यं भवतां सुरेश मन्मस्तके यातु किरीटसख्यम् ॥ ३७ ॥
जिनेन्द्रधर्मस्य समुन्नतीनां सार्वत्रिकीणां परभागभाजाम्।
सदेहलोकेऽपि भवत्प्रसादान्निबन्धनं स्यामिति मेऽभिलाषः ॥ ३८ ॥
ततः सुरो चिन्तयदस्य पुण्यैः प्राज्यैरुदेति स्म शुभाशयोऽयम्।
जागर्ति यः सिद्धिसुखोत्तरायै नरामराधीश्वरसंपदेऽपि ॥ ३९ ॥
संपत्स्यते ते स्वयमेव पुण्यैस्त्रिविष्टपाभीष्टकरैस्तदिष्टम्।
साहाय्यमात्रं त्विह मत्प्रभावस्तं प्रत्यवादीत्त्रिदशः प्रहृष्टः ॥ ४० ॥

बिभ्रत्यदभ्रां सुरपद्मलक्ष्मीं सौधे समस्ताद्भुतवस्तुभाजि ।
रूपश्रिया प्रीणितनेत्रया च चक्रे स तौ स्वर्मिथुनायमानौ ॥ ४१ ॥
ततो विमाने किरणैर्मणीनां दिवामणेर्विभ्रममादधाने ।
निवेश्य दिव्यर्द्धिविशेषरम्ये स **श्रीपुरोद्यान**मवापयत्तौ ॥ ४२ ॥
तदास्य भूभर्तरि कालधर्मः क्रोडीकृते दैववशादपुत्रे ।
समाकुले राजकुले समन्तादस्तंगते भानुमतीव चक्रे ॥ ४३ ॥
लुण्टाकलोकेन विलुण्ठ्यमाने गृहे गृहे पौरजनस्य चित्ते ।
नीराजराज्यग्रहणाग्रहेण डोढौक्यमानेऽपरराजलोके ॥ ४४ ॥
निधीयमाने च धने धरायां सर्वत्र विस्फूर्जति वैयसे च ।
राजानमैच्छज्जनता तदानीमुपप्लवानामुपशान्तिहेतुम् ॥ ४५ ॥ (विशेषकम्)
उपद्रवं सर्वमपास्य देवः पयोधरस्येव पयो दवाग्निम् ।
प्रदर्शयामास ततः कुमारं राज्योचितं राजसभासदां सः ॥ ४६ ॥
अनेन नाथेन सनाथतां नः श्रीमत्कुमारेण विभो विधेहि ।
सुरेश्वरेणेव विधिः सुराणां तैर्व्यज्ञपीदं स नमच्छिरोभिः ॥ ४७ ॥
मुदाभिषिक्तोऽथ स तेन तत्र रराज राजा शरदीव शूरः ।
यस्य प्रतापः प्रतिपन्थिकान्ताकपोलपत्राङ्कुरशोषणोऽभूत् ॥ ४८ ॥
सुपर्वणा पर्वणि तत्र दत्तश्री**राजसिंहा**परनामधेयः ।
सामन्तमुख्यैरथ स प्रणेमे पृथुप्रभावो जयशब्दपूर्वम् ॥ ४९ ॥
तूर्यत्रयं तत्र सुराङ्गनानामपूर्वरूपं रसभावरम्यम् ।
राज्योत्सवेऽभूत्तदशेषविश्वं प्रमोदमुद्राङ्कितमेव यत्र ॥ ५० ॥
एकातपत्रं विदधे स्वराज्यं स धर्मधुर्यो जिनशासनं च ।
दिव्यप्रभावात्प्रभविष्णु किं न त्रिवर्गसर्वस्वमितीन्दुकीर्ति ॥ ५१ ॥
यदद्भुतं किंचन देहभाजां यद्वर्णनाव्यग्रमुखा नरेन्द्राः ।
यदैहिकामुष्मिकसौख्यमूलं विश्राणितं तत्त्रिदशेन तस्य ॥ ५२ ॥
अयं घनस्येव समुन्नतिं यज्जिनेन्द्रधर्मस्य शुचिः करोति ।
तदुक्तनिर्वाहधुरंधरेऽत्र स्थाने ममासौ सफलः प्रसादः ॥ ५३ ॥

इति प्रमोदामृतवीचिमज्जन्मनाः सुरेन्द्रप्रतिमः स देवः ।
**विद्युत्प्रभः** क्ष्मापभृतमुवाच वाचस्पतेरपि प्रीतिकरैर्वचोभिः(?) ॥९४॥

धर्म्यैर्गुणैस्ते हृदयं मदीयं वशीकृतं गौरयशोवतंसैः ।
नरेन्द्र शार्दूलसमूलचूलसंसारवृक्षक्षयबद्धकक्षैः ॥ ९५ ॥

सद्भावभाजा विनयेन भक्त्या संदानितात्मेव न गन्तुमीशः ।
तवाद्य यद्यप्यमरेन्द्रपुर्यां तथापि मामुत्कलयोचितज्ञः ॥ ९६ ॥

सम्यग्दृशां देव शिरोमणिस्त्वं स्वयं सुरेन्द्रेण निबद्धसख्यः ।
अन्वग्रहीर्मामपि तादृशं यल्लोकोत्तरं ते चरितं यदीश ॥ ९७ ॥

स्तुत्वेति तं भक्तिभरावनम्रः संपूज्य पूज्यं विहितोपकारम् ।
स प्रार्थयामास दृशोः सदास्तु त्वद्दर्शनानन्दमयोत्सवो मे ॥ ९८ ॥

तदनु तदनु रागेणान्तरङ्गीकृतात्मा
शुचि यशसि चरित्रे **राजसिंहस्य** देव ।
सुरपरिवृढबन्धुर्विस्मयस्मेरनेत्रं
जगदपि विदधानः स्वश्रिया स्वर्जगाम ॥ ९९ ॥

अथ सकलधराया मण्डनाङ्गं सराज्यं
.........सुकृतज्ञः कार्मणं सिद्धिवध्वाः ।
त्रिभुवनमपि कीर्तेर्लास्यलीलैकरङ्गं
गुणिषु निपुणदानं श्रीनिदानं चकार ॥ ६० ॥

राज्ये निवेश्य तनयं समये जितारिं
राजा तया मृगदृशा सह कान्तिमत्या ।
कोटिं....समधिरुह्य च भावनाया
दिव्यं विमानमिव स त्रिदिवं जगाम ॥ ६१ ॥

वृन्दैरप्सरसां विलस्य विनमत्स्वःसद्मचूडामणि-
श्रेणीषु प्रतिबिम्बचुम्बिचरणां भुक्त्वेन्द्रराज्यं चिरम् ।
क्षोणीमण्डलपालनाय करुणोद्रेकादिवावातरः
स त्वं **विक्रमसिंह**भूपतिकुले श्रीमज्ज**यन्तो** नृपः ॥ ६२ ॥

प्रथितलटभरूपान्तःपुरीचक्रवाले
तुलित····लिकलक्ष्म्याः कान्तिमत्याश्च जीवः ।
अजनि स मुनिदानादिन्द्रसामानिकश्री-
स्तदनु नृपतिपुत्री प्रेयसी ते च भूप ॥ ६३ ॥
विद्यादेवीनिजगतिभुवा तत्र जातिस्मरेण
व्यक्ते हस्तामलकतुलया पूर्वजन्मस्वरूपे ।
शुद्धे पक्षे शशिसमुदयेनाम्बुराशेरिवाम्भः-
स्तस्य प्रेमानवधि मिथुनस्याथ विस्तारमाप ॥ ६४ ॥
इतः प्रत्यक्षं ते चरितमुदितश्रीपरिकरं
परं किं किं ब्रूमोऽपरनृपयशःकैरवरवे ।
इदं विद्यादेवी निगदितवती तेन महिता
विसृष्टा हृष्टा सा द्रुतमथ तिरोऽभूत्तडिदिव ॥ ६५ ॥

इति श्वेताम्बरश्रीमदभयदेवाचार्यविरचिते जयन्तविजयनाम्नि महाकाव्ये
श्रीशब्दाङ्के नरेन्द्रपूर्वभववर्णनो नाम सप्तदशः सर्गः ।

---

## अष्टादशः सर्गः ।

अथ निरन्तरया रतिसुन्दरीमुखसुधाकरचन्द्रिकयाञ्चितः ।
अपि समागतमुष्णशतं नृपः शशिरकालमिवाकलयत्तदा ॥ १ ॥
यदभिसंगमतः खलु मित्रतोऽप्युदयते परितापभरो भुवि ।
उपद्रवादिव वीरुधिदारुणः किमु निदाघऋतुः स न दुर्जनः ॥ २ ॥
अकृत सृष्टिममुष्य सरस्वती सुचिरशोषकृतोऽपि ऋतोर्विधिः ।
भुवि पुराणपुमानिति मन्दधीरति कलङ्कपदं स ततोऽजनि ॥ ३ ॥
दिनकरः करदण्डनिपातनैस्त्रिजगतां परितः परितापदः ।
तदपि पङ्कजिनीष्वमृतायते प्रियतमासु न को हि मृदुर्यतः ॥ ४ ॥
पथिषु पान्थजनस्य चरेणवस्तपनतापवनं··नखंपचाः । (?)
स्फुरितवह्निकणैरिव वर्षिणः सततगाश्चनितान्तमरुंतुदाः ॥ ५ ॥
बहुनृपेव रसारसपानतस्तरणिरेष महाभरदुर्वहः ।
अभवदस्य रथाश्वगतिः शनैर्ध्रुवमतो दिनवृद्धिरजायत ॥ ६ ॥

सरसचन्दनपङ्कविलेपनैः सुपनसारपरागतरङ्गितैः ।
शिशिरतादिगुणैः स्विभि(?)रञ्चितैः सततगैः सुरतक्रमहारिभिः ॥ ७ ॥
घननिभैः कदलीदलमण्डपैः स्मरविबोधनबन्धुरपण्डितैः ।
विमलमौक्तिकभूषणभूषया तुहिनरश्मिरुवाच जलार्द्रया ॥ ८ ॥
हिमरुचे रुचिरैः करकोरकैरुपवनैर्मधुधौतधरातलैः ।
स्मितसरोजरजःसुरभीभवन्न····पयस्सु रयस्सु वमज्जनैः ॥ ९ ॥
अभिमतैः शिशिरैरपरैरपि स्मरनरेन्द्ररसाढ्यरसायनैः ।
जगति भोगिजनेन पुरस्कृतैर्लघुनिदाघऋतुः परिभूयते ॥ १० ॥
(चतुर्भिः कलापकम्)
सरसकेलिमिथाङ्गनिपीडनैर्दृढमनङ्गसुखैः खलु वञ्चयते ।
यदिह भोगिजने घनधर्मतस्तदिहमुग्रऋतोः खलु वल्गितम् ॥ ११ ॥
व्यरचि यो मृगलोचनया प्रपा सुरभिकुम्भजलेन युवा तृषः ।
लवणिमामृतनिर्भरपानतोऽजनि स तत्कुचयोस्तृषितोऽद्भुतम् ॥ १२ ॥
गिरिदवानलदग्धवनोद्भवं भ्रमति भस्मसितं विततीकृतम् ।
जगति बन्दिजनैरिव वायुभिर्यश इवोष्ण ऋतोरवनीपतेः ॥ १३ ॥
खररुचे रुचिभिः परितापितैः प्रकुपितैरिव मण्डलमादधे ।
अनिलतो विततैर्दिवरेणुभिः कलितपाकपलाशदलोपमम् ॥ १४ ॥
न परमुग्रमयं **रतिसुन्दरी** प्रियतमः सहते निजशासनात् ।
इति भयादिव कम्पितमानसस्त्वरितमुग्रऋतुः प्रपलायत ॥ १५ ॥
जय जयोन्मुखमङ्गलपाठकैरिव कलापिकुलैः कलनादिभिः ।
घनघनाघनघोषमिषेण च प्रसृमरैर्जयदुन्दुभिनिःस्वनैः ॥ १६ ॥
जलदमध्यचलद्विशकण्टिकावनिमिषाच्चमरैश्च चलाचले ।
स्फुटशिलन्ध्रिततातपवारणैर्भुवि तपात्ययभूभृदवातरत् ॥ १७ ॥
वितनुते भुवनाद्भुतवैभवं त्वमिव किंतु मुखे मलिनत्वमभूत्(?) ।
अयमिति प्रियमुक्तवती सती समभवद्रतये **रतिसुन्दरी** ॥ १८ ॥
मिथुनकैर्नववारिदवायुना पुलकितैरमृतोर्मिविवर्षिणा ।
अथ मिथः परिरम्भसुखैस्तदा नवमिवाक्रियते स्मरशासनम् ॥ १९ ॥

जलदकालनृपस्य घनो भटः परिलसत्तरवारिसमुद्भटः ।
तडितमुग्रकृतो स्म दिदृक्षया क्षिपति दृष्टिमिवातिरुषां नृणाम् ॥२०॥
भृतनभस्तलवारिदवृष्टिभिर्नयनयोर्द्रुतमर्पितकौतुकः ।
विलसतां सह वल्लभया भृशं भवति वारिमुचां समयः प्रियः ॥ २१ ॥
भुवनमप्यमृतेन पयोधरः सुखयति प्रहतातपवैशसः ।
विरहिणीर्दहति स्मरवह्निना पुनरहो चरितं विविधं विधेः ॥ २२ ॥
कवलितं सकलं किल तेजसं पटलमुल्बणमुग्रकृतोरिव ।
पवनवल्गितदीप्तदवानलप्रशमनच्छलतो घनवारिभिः ॥ २३ ॥
जलदवारिकणैः परिचुम्बितं नवकदम्बमुदञ्चितकेसरम् ।
अनुकरोति विलासिनमुच्चकैः पुलकितं दयितापरिरम्भणैः ॥ २४ ॥
गिरिशिरःपरिपातितरङ्गिणीतरलतुङ्गतरङ्गपयःप्लवः ।
त्रिजगतामुपकारितया श्रमयश इव प्रतिभाति पयोमुचः ॥ २५ ॥
जगविलासमयेऽपि मनस्विनी स्फुरितमानविखण्डनपण्डिते ।
नवघने बहुमानपरम्परा निशमभूदुपकारिणि कामिनाम् ॥ २६ ॥
स्मितवती कुटजैः स्फुटकेतकीद्युतिभिरिद्धकटाक्षपरम्परा ।
घनविभूतिरियं जगतीतले ललति रञ्जितकामनरेश्वर ॥ २७ ॥
रुचिरतां चिनुते स्म परां घनः किशलपुष्पफलैश्च वनश्रियाम् ।
मृगदृशामिव यौवनमुन्नतं स्मरविलासकुलैरिव विभ्रमैः ॥ २८ ॥
रविमवेत्य निदाघमिवापरं जगदरुंतुदमम्बुधरः क्रुधा ।
वसुविलासमपास्य विनिर्ममे कवलिताखिलमण्डलमुच्चकैः ॥ २९ ॥
जगदुपद्रवणेषु सहायतां विदधतोग्रकृतोरहिमांशुना ।
मिलति दशदिनेष्वरिणा ततः····रुचि गिलितस्तनयित्नुना(?) ॥ ३० ॥
रुचिरकाञ्चनचित्रमणिप्रभा वलयपल्लवभृन्मुकुटश्रियम् ।
दधदिवेन्द्रशरासनमण्डलं घनकृतो नृपतेः प्रविराजते ॥ ३१ ॥
सम····वर्षणतः सफलीभवत्कृषिवलो·······दृशां दृशाम् ।
परिचयादिव वारिमुचां चयः शुचिमरीचिमरीचिनिभो बभौ ॥ ३२ ॥

प्रतितसर्वजनीनसमुन्नतौ विगलितायुषि वारिदभूभुजि।
अथ जयन्तनरेन्द्रमुपाययौ स्मरशरैर्विधुरेव शरद्वधूः ॥ ३३ ॥
कुसुमसायकनायकपत्तनप्रतिनिधिं स च सौधमधिश्रितः।
प्रणयिनीमथ कर्णरसायनं वचनमेवमुवाच महीपतिः ॥ ३४ ॥
प्रियतमे रतिसुन्दरि निश्चितं शरदियं तव याति सदृक्षताम्।
अपकलङ्कशशाङ्कमुखी भवेद्यदि सदा स्मितकैरवलोचना ॥ ३५ ॥
इह मरालकुलं कमलाकरे सरभस रमते कलकूजितम्।
विशदपक्षवतां गुणिसंगमः कलयतीष्टतरेषु धुरीणताम् ॥ ३६ ॥
जलदबन्धनमुक्तिमहे विधोः स्नपयितुर्जलधेरिव वीचितः।
पतितमुज्ज्वलमौक्तिकमण्डलं स्फुरति तारकचक्रमिषादिव ॥ ३७ ॥
जगति पङ्कमकारि मम द्विषा जलभृता सरितश्च विवर्धिता।
इति रुषेव रविस्तदशोषयत्प्रविदधेति तनूरबला हिताः ॥ ३८ ॥
अहनि तापमधत्त परं रविर्घनघनां च शशी निशि चन्द्रिकाम्।
शरद इष्टतरावधिकारिणाविव निदेशवशात्कुरुतस्तथा ॥ ३९ ॥
दिनकरस्य करैः परिपाकतो जलमशेषजलाशयसंगतम्।
सरसतां शरदि प्रतिपद्यते निशि शशिद्युतिभिः शशिकान्तिभिः॥४०॥
मदभरोच्छलनेन निरङ्कुशाः प्रबलदर्पभरादिह कुञ्जराः।
ततकरोन्नमनैर्गलगर्जिभिर्विदधतीव सुरद्विपतर्जनम् ॥ ४१ ॥
कविजुषामपि कान्तरसात्मनां विदधते सरितां तटपाटनम्।
इह वृषाः शितशृङ्गशिखायुधैः क्व खलु दुर्मदिनामुचितज्ञता ॥ ४२ ॥
कलमशालिवनं नवगोपिका मृगदृशः परिपान्ति मृगादितः।
कलरवैस्तरुणान्नवसंगमे कुसुमसायकसायकपाततः ॥ ४३ ॥
विलसदङ्कुरसत्पुलकाञ्चिताः शरदि हृद्यरसश्रुतिविश्रुताः।
अलिकुलामदलावलिकुन्तलाः प्रियतमा इव भान्ति भुवीक्षवः ॥ ४४ ॥
मृगदृशां कलगीतरसे निशि प्रसरतीह जगन्मुदमाययौ।
मृगवियोगभिया मृगलाञ्छनः पुनरभूदतिपाण्डुवपुर्ध्रुवम् ॥ ४५ ॥

जगति राजसि रक्षय मण्डलैर्धनसमृद्धिबलैश्च विभूषितः ।
इति **जयन्त**नृपः सुभगैर्गुणैर्हृतहृदा शरदा समुपासत ॥ ४६ ॥
नृपसुताक्षितिपाधिपयोस्तयोरतिरतिप्रिययोर्नवयोरिव ।
सरसकान्तकुतूहलकेलयेऽजनि शरत्समयः समयोः श्रिया ॥ ४७ ॥
कतिपयेषु दिनेषु गतेष्वथ स्वपितरोहितधीः परमार्हती ।
जिनमते प्रतिबोधयति स्म सा स्मितसरोजमुखी नृपनन्दिनी ॥ ४८ ॥
स परिपाकविवेकभराङ्कुरप्रतिमरोमसितं नरपुंगवम् ।
समवलोक्य जराज्वरजर्जरं नृपतिरेवमचिन्तयदेकदा ॥ ४९ ॥
वपुरिदं प्रथमं सुखसाधनं तदपि रोगजरादिभिरस्थिरम् ।
किमिह मिष्टफलं प्रभवं वनं वनजवह्निशिखाभिरभङ्गुरम् ॥ ५० ॥
स्मरसमाकुलपङ्कजलोचना ललितलोचनचञ्चलमङ्गिनाम् ।
प्रथितमायुरुपैति च यौवनं तरणितापितपुष्पदलश्रियम् ॥ ५१ ॥
लवणिमा सुरकार्मुकसोदरः सुभगता तु सखा वफला रुचाम् ।
अतुलरूपबलाद्यपि देहिनां समदसिन्धुरकर्णचलाचलम् ॥ ५२ ॥
नववधूप्रियसंगमसंभ्रमस्तनतटीतलहारलतातुलम् ।
जगति राज्यमशेषधराधराधिपशिरोमणिलालितशासनम् ॥ ५३ ॥
स्फुरितकोपफणीन्द्रफणावलीतलनिवासरतिं भजतामिव ।
विषयसेवनमुक्तिमुपेयुषां सुखविषादिव दुर्गतितो भयम् ॥ ५४ ॥
भवति शारदनीरदसोदरं सकलमेव भवप्रभवं सुखम् ।
परिणतौ विरसं मधुरं मुखे विषतरोरिव पक्कफलं नृणाम् ॥ ५५ ॥
त्रिभुवनेष्वपि नित्यमनित्यताकवलितं निखिलं खलु खेलति ।
तदविलम्बमनन्तसनातनानुपमशर्म करं व्रतमादधे ॥ ५६ ॥
क्षितिवधूधव **विक्रमसिंह**भूस्त्रिभुवनाक्रमणैव पराक्रमः ।
मम सुतापतिरेष विशेषतः प्रणयभूरसतस्य सुतोऽधुना ॥ ५७ ॥
निजकुलागतराज्यसमर्पणं ध्रुवममुष्य ममाप्यतिसुन्दरम् ।
इति विचिन्त्य चिरं मणिमञ्जरीपतिरमात्यमतं जगृहेऽत्र सः ॥ ५८ ॥

अभिषिषेच **जयन्त**नरेश्वरं तमधिराज्यमुदारमहेन सः।
कनककुम्भमुखोच्छलिताम्बुभिः पुरजनोऽप्यनुरागसुधारसैः ॥ ९९ ॥
स जिनसङ्घपदाम्बुजपूजनं प्रमुदितार्थि च दानमनेकधा।
क्षितिभृतां व्रतराज्यपरिग्रहे यदुचितं तदशेषमचीकरत् ॥ ६० ॥
सह **जयन्त**नृपेण स **हास्तिनापुर**पतिर्गुरुमेत्य विनत्य च।
शिरसि मौलिमिवाञ्जलिना परं विरचयन्नतिधर्ममयाचत ॥ ६१ ॥

सानन्दं गुरुणा ततः करनखज्योतिःप्रवाहाम्बुना
राज्ञस्तस्य विनिर्मिते व्रतमहाराज्याभिषेकक्रमे।
तत्रासौ मुमुदे शुचौ च सुचिरं **श्रीमज्जयन्तः** पुन-
स्तत्त्वज्ञोऽपि विमुह्यतीष्टविरहे धिङ्मोहलीलायितम् ॥ ६२ ॥

चक्रेऽथ बन्धुरवचः किरणैस्तदीयं
स्वान्ताम्बुजं विगतशो····विकोचमुद्रम्।
**सूरिर्दिवाकर** इति प्रथितो गुणेन
नाम्ना च चित्रमभृतं क्षरतीक्षणेषु ॥ ६३ ॥

स्मेरास्यः श्रीविलासः सुचिरमथ गुरोः पादपङ्केरुहाणां
प्रीत्योपास्तिं विधाय प्रणतिमपि मुनेस्तस्य भूवल्लभस्य।
पीयूषस्यैव वृष्टिं निजसुकृतयशःशाखिनस्तन्मिषेण
क्षोणीनाथ प्रकाण्डः क्षितिपगृहमगात्स श्रियां डम्बरेण ॥ ६४ ॥

चूडारत्नायमानः समजनि महतां यः क्षमापालकानां
विश्वश्लाघ्याद्यरेष(ख)श्चरणगुणगणैर्धर्मलीलाबलेन।
जित्वा मोहं ससैन्यं त्रिभुवनजयिनं केवलज्ञानलक्ष्मीं
लब्ध्वा श्रीमन्मुनीन्द्रो रमयति हृदये **वैरिसिंहा**भिधानः ॥ ६५ ॥

सार्धं करैः शूर इवाथ **सूरिः** स **केवली** केवलिमुख्यशिक्षैः।
कदाचिदन्यत्र पुरे प्रतस्थे भव्यारविन्दप्रतिबोधनाय ॥ ६६ ॥

तदनु तमनुगम्य श्रीमुनीन्द्रं नरेन्द्रो
मुदकलयदसन्दं(?) साश्रुनेत्रोऽभिवन्द्य।

तमपि गुरुरथाशीर्वाददानेन कामं
　व्यदधदमृतपूरेणेव निष्पापतापम् ॥ १७ ॥
निर्व्याजस्मरकेलिनिर्भररसे प्रोज्जृम्भमाणेऽनिशं
　सोत्कम्पा **रतिसुन्दरी** प्रणयिनी जज्ञे स्फुरत्साध्वसा ।
उन्मीलद्धनकण्टका च परितः क्षोणी तु नो जातुचि-
　त्तस्मिञ्शासति राज्यमूर्जितनये **श्रीमज्जयन्ते** नृपे ॥ १८ ॥

इति श्वेताम्बरश्रीमदभयदेवाचार्यविरचिते जयन्तविजयनाम्नि महाकाव्ये
श्रीशब्दाङ्के ऋतुत्रयवर्णनो नामाष्टादशः सर्गः ।

---

एकोनविंशः सर्गः ।

अथान्यदाध्यास्त सभां स भूपः सुधर्मयापि स्पृहणीयशोभाम् ।
अत्यन्तविस्फारितवैरिसिंहक्ष्माधिराजः स्वगुणैः प्रजानाम् ॥ १ ॥
अमात्यमात्मीयपितुर्नृपस्य द्वितीयमात्मानमिवेयिवांसम् ।
निवेदितं वेत्रधरेण वीक्ष्य चक्रे स **विद्याधर**चक्रवर्ती ॥ २ ॥
कृतप्रणामं सविधासनस्थं संमान्य मान्यं समपृच्छदेनम् ।
नरेन्द्रनम्या मम तातपादाः कल्याणिनः संप्रति मन्त्रिराजः ॥ ३ ॥
स क्षेम लक्ष्म्या ललितैर्विलासैर्निरन्तरं दुर्ललितः क्षमेन्द्रः ।
त्वां द्रष्टुमुच्चैरुदकण्ठतेति व्यजिज्ञपन्मन्त्रिपतिर्**जयन्तम्** ॥ ४ ॥
ततः प्रतापेन विवर्ध्यमाने साम्राज्यसौस्थ्ये सकलेऽपि तत्र ।
राजा स राज्यस्थितयान्वयुङ्क्त स्वमन्त्रिणं तातविलोकनोत्कः ॥ ५ ॥
दिव्यैर्विमानैः खचरेश्वराणां मणिप्रभाक्लृप्तसुरेन्द्रचापैः ।
सैन्यैर्वरेण्यैश्च धराधराणां स रोदसीं संकटयंश्चचाल ॥ ६ ॥
**श्रीमज्जयन्तः** स्वपुरीं **जयन्ती**मालोक्य लोकोत्तरकान्तलक्ष्मीम् ।
आवासयामास विशामधीशे समन्तदुद्यानभुवं विदूष्य ॥ ७ ॥
कुमारसैन्यादथ मन्त्रिराजं स प्रेषितात्मीयनरान्निशम्य ।
समागतं नन्दजयन्तनामा''''''''''''नमितो **जयन्त्याः** ॥ ८ ॥
ततः स वैरिक्षितिपालमौलिमालासु खेलाद्गुरुशासनश्रीः ।
अचीकरत्तां नगरीं प्रवेशमहोत्सवाशेषविशेषभूषाम् ॥ ९ ॥

सामात(?)राजन्यकमन्त्रिराजमुख्यैरशेषैरपि राजलोकैः ।
पुरः प्रधानैश्च समेत्य तत्र स स्वामिसुनुर्मुदितैरनामि ॥ १० ॥
राज्ञो निदेशात्समुपेत्य तत्र प्रणम्य मन्त्रा विबुधः कुमारम् ।
उत्कण्ठितस्ते मुखदर्शनाय पितेत्युदीर्याचलयन्नगर्याम् ॥ ११ ॥
मौहूर्तिकेनाथ शुभे मुहूर्ते निवेदिते स क्षितिपालसूनुः ।
तत्र प्रवेष्टुं प्रगुणीबभूव विधाय सर्वं समयानुरूपम् ॥ १२ ॥
अन्तःपुरालंकृतयाप्यमाने विद्याधराधीश विमानवृन्दैः ।
पदातिहस्त्यश्वरथप्रतानैः सकौतुकं स्वःपतिनापि दृश्यैः ॥ १३ ॥
सुधांशुबिम्बेन भियेव राहोः श्रितेन शुभ्रातपवारणेन ।
लक्ष्मीजयश्रीप्रहितैः कटाक्षैरिवोच्छलद्भिश्चमरैर्विलक्षैः ॥ १४ ॥
माङ्गल्यमन्त्रैरिव शङ्खनादैः समुल्लसद्भिः सह पञ्चशब्दैः ।
बन्दीन्द्रकोलाहलमांसलैश्च जयारवैर्हर्षयशोधिचन्द्रे ॥ १५ ॥
करीन्द्रघण्टारवडम्बरेण निश्वासनादेन भृताम्बरेण ।
साम्राज्यलक्ष्म्या च विराजमानस्ततश्चचाल क्षितिलोकपालः ॥ १६ ॥
(चतुर्भिः कलापकम्)

अत्रान्तरे राजसुतप्रवेशमहोत्सवालोकसमुत्सुकानाम् ।
उपेयुषीणां पुरसुन्दरीणां विलासलीलायितमेवमासीत् ॥ १७ ॥
कुमारलावण्यरसं निपीय काचित्सतृष्णान्तरुदीर्णकम्पा ।
कन्दर्पवैद्यं स्वपुरस्थमास्य सौरभ्यलोलालिरवैरिवाह्वत् ॥ १८ ॥
कन्दर्पशिष्योपनिषत्स्वरूपैर्लीलाविलासैः स्फुटमाक्षिपन्ति ।
उपेक्षिता काचन तेन तन्वी मुमोच सौभाग्यमदातिरेकम् ॥ १९ ॥
ययौ न या गोचरमीक्षणानां मनोरथैरप्यकलङ्कशीला ।
तस्याः सुखेन स्तनसङ्गभङ्गी यूनस्तदा कस्य न कस्य जज्ञे ॥ २० ॥
यद्वीक्षणासक्तमना जनौघसंमर्दतः स्रस्तनितम्बवस्त्रा ।
विलोकिता कापि न कं चकार सहास्यतेऽलं समकालमेव ॥ २१ ॥
त्वं मन्थरायां हि गतौ गुरुर्नस्त्रपामहे तेऽद्य तया न धातुः ।
इतीव कष्टाज्जगदे स्वनादाच्छलेन काचित्किल केलिहंसैः ॥ २२ ॥

एकेन कर्णोत्पलरेणुपातादुदश्रुणान्येन विकाशिनोऽक्ष्णा ।
सशोकहास्याभिनयैककालं काचित्स्मराभूत्स्मरनर्तकीव ॥ २३ ॥
नृपात्मजालोकनकौतुकाय समुत्सुका काचन कैरवाक्षी ।
नितम्बबिम्बं स्तनमण्डलं च निनिन्द मन्दां गतिमादधानम् ॥ २४ ॥
तं राजहंसं····भुजस्थ········त्केलिकौतूहलतश्चिकीर्षुः ।
प्रसारयन्ती निजबाहुयुग्मं दूरेऽपि लोकैः समहस्यतान्या ॥ २५ ॥
किं चावदत्कापि विलाससारा सारङ्गकान्ताकमनीयनेत्रा ।
स्मरोऽङ्गलक्ष्म्यायमपूर्वरूपस्तत्पूजयैनं सखि नेत्रपुष्पैः ॥ २६ ॥
चन्द्रानने नित्यमखण्डवृत्तः स्मराम्बुराशेर्जनकः प्रतीतः ।
कलङ्कमुक्तोऽयमपूर्वराजः पुरः समभ्येति विलोकयैनम् ॥ २७ ॥
दृशां सहस्रैर्निचितं यदङ्गं रूपेण संमर्दभियेव मुक्तम् ।
मुग्धा शची तत्र रता सुरेन्द्रे सखीह रूपेऽपि सतीहरूपे ॥ २८ ॥
कन्दर्पराजेन निवेशितानां स्वराज्यमन्त्रीशपदेऽङ्गनानाम् ।
वैदग्ध्यदग्धानि तथा वचांसि शृण्वन्स भूपः स्वपुरीं विवेश ॥ २९ ॥
आत्मैव यस्योपमितिः समृद्ध्या जगत्यसाधारणतां गतस्य ।
तस्य स्वसौधस्य समीपमाप **श्रीविक्रम**क्षोणिपतेस्तनूजः ॥ ३० ॥
विलोचनैरात्मजवक्त्रचन्द्रज्योत्स्नां निपीयाथ चिरं नरेन्द्रः ।
उत्तीर्य सौधोपरिभूमिकायाः सद्यः समाभूमिमलंचकार ॥ ३१ ॥
प्रातः सहस्रांशुरिवांशुजालैर्बद्धानुरागैर्नभसि प्रदीपैः ।
राजंस्तदा तत्र स राजकार्यैर्विवेश **विद्याधर**चक्रवर्ती ॥ ३२ ॥
भा(ता)भिः प्रणामाञ्जलिपाणिपाणिरुहां स्फुरद्दीपशिखासखीभिः ।
ताडङ्कनीलोत्पलरश्मिदूर्वाङ्कुरैः स्फुरद्दृष्टिभिरक्षतैश्च ॥ ३३ ॥
हारप्रभाशुद्धसुधाभिरामैस्तुङ्गैः स्तनैरुच्छ्रितपूर्णकुम्भैः ।
माङ्गल्यमादौ सुदृशां तदासीत्पश्चात्प्रदीपप्रमुखैश्च तस्य ॥ ३४ ॥
पुरंदरस्यैव पितुर्जयन्तस्ततः प्रणामं प्रणयेन चक्रे ।
मातुस्तथा **श्रीरतिसुन्दरी** च कुल्याः कुलाचारविधिप्रिया हि ॥३५॥

आलिङ्ग्य सर्वाङ्गमथावनीशस्तमात्मजं मौलितले चुचुम्ब ।
निसर्गतः प्रेमपदं हि पुत्रः पितुर्विशेषेण महोदयं तु ॥ ३६ ॥
निषेदुषि श्री····नृपो जयन्ते यथोचितं सर्वसभाजने च ।
अचीकरत्तत्र महीमहेन्द्रो महोत्सवं विश्वतरङ्गितोषम् ॥ ३७ ॥
स तस्य सूनोरजनिष्ट भक्त्या निरन्तरं पल्लवितप्रमोदः ।
राज्ञोऽपि मुख्यं गृहवाससारं श्लाघ्यं हि बन्धोः प्रतिपत्तिरेव ॥ ३८ ॥
परेद्युव(द्यवि)क्षोणिधवस्तरङ्गत्संवेगसर्वस्वसुधासमुद्रः ।
राज्यादिसंपत्परिरम्भसौख्ये पराङ्मुखश्चिन्तितवानथैवम् ॥ ३९ ॥
वंशेऽवतंसध्वजतुल्यमस्मिञ्जयन्तमेनं विनिवेश्य राज्ये ।
त्वरे महानन्दपदाय धीमान्विलम्बते कः परलोककार्ये ॥ ४० ॥
सदस्यभिप्रायमिमं निवेद्य सुतस्य सर्वं विदधे तथैव ।
अन्ते च योगेन तनुत्यजां स शिश्राय मार्गं सुधियां नृपाणाम् ॥४१॥
श्रुताभिषेकं जनकस्य राज्ये तमेत्य भूगोचरखेचरेन्द्राः ।
नत्वोपढौक्योऽद्भुतढोकनानि सिषेविरे नम्रशिरःकिरीटाः ॥ ४२ ॥
प्रमोदितास्तेन महाप्रसादैर्निजं निजं राज्यमयुर्विसृष्टाः ।
महीपतेस्तस्य गुणैरनन्यैः संदानितान्तःकरणास्ततस्ते ॥ ४३ ॥
कुमद्वतीनामिव स प्रजानां लक्ष्मीविलासाय बभूव राजा ।
समूलकाषं कषितोरुदोषश्चित्रीयते तेन न कस्य चेतः ॥ ४४ ॥
हठो भवेच्छौर्यशठस्य जन्तोः क्षिप्रं विपक्षे बलिनि क्षयाय ।
कुण्ठत्वमायाति हि वज्ररत्ने निशातधारापि कृपाणयष्टिः ॥ ४५ ॥
शुभाशुभाय प्रभविष्णुपूर्वं कर्मैव किं तत्र समुद्यमेन ।
यदेव भाव्यं भविता तदेव कर्म द्वितीयं व्यभिचारि चेदम् ॥ ४६ ॥
बीजं यथा वारि विनाङ्कुराय तथोद्यमं कर्म फलाय नैव ।
भवेदतो दूरितदोषमासीच्छ्रेयस्करं कर्म नयश्च तस्य ॥ ४७ ॥
अङ्गैस्ततः सप्तभिरप्यवन्ध्यं प्रवृद्धशक्तित्रयकीर्तिरेषः ।
राज्यं शशासापरवैरिनाशान्षडन्तरङ्गानविजित्य शत्रून् ॥ ४८ ॥

तेन प्रयुक्तापणबन्धमुख्या गुणा न वैफल्यमयुः कदाचित् ।
उप्ता नरैरुत्तमभूमिकासु सुवृष्टियोगादिव सस्यसङ्घा ॥ ४९ ॥
काले च पञ्चाङ्गमपि प्रकामममात्यवृद्धैः सह मन्त्रमेषः ।
चकार दुर्वारतरारिवारनिवारणेऽसौ यदमोघमस्त्रम् ॥ ५० ॥
प्रशासतस्तस्य नयेन भूमिं क्रमादभूदङ्कगतं जिगीषोः ।
सिद्धित्रयं निर्ममतान्वितस्य यदेह दण्डत्रितयं मुमुक्षोः ॥ ५१ ॥
धर्मार्थकामत्रयमण्डनेन स मण्डयामास नृपप्रकाण्डः ।
जन्म स्ववीर्यं जिनरम्यहर्म्यश्रीताण्डवेन क्षितिमण्डलं च ॥ ५२ ॥
देवी क्रमाद्वा····युगेस्तनूजा(?) तनुप्रभापूरनिरस्तशूरम् ।
असूत सूनुं **रतिसुन्दरी** च संचारिणं क्षात्रमिवाथ धर्मम् ॥ ५३ ॥
आद्यस्तयोर्वज्रधराधिवीर्यो बभूव **वज्रायुध**नामधेयः ।
चक्रायुधोऽन्योऽरिवधूकपोलपत्राङ्कुरग्रासरसासिधेनुः ॥ ५४ ॥
यौ दानभोगाविव वैभवस्य व्योमाङ्गणस्येव च पुष्पदन्तौ ।
सौभाग्यरूपे इव यौवनस्य शोभाभरं बिभ्रतुरस्य राज्ञः ॥ ५५ ॥
सदा यतिं धारयता समन्तात्तथा सुवृत्तेन सदार्जवेन ।
भुजद्वयेनेव निजेन तेन रराज राजा तनयद्वयेन ॥ ५६ ॥
श्रुतेन शीलेन गुणोदयेन स्थाम्ना च धाम्ना च वपुःश्रिया च ।
अभूतपूर्वामपि तैरभूतां तावेव तस्योपमिती नृपस्य ॥ ५७ ॥
प्रज्ञातिरेकेण बला बभूवुस्तयोः समालिङ्गनतः कृतार्थाः ।
उदग्रसौभाग्यगुणोदयेन वशंवदा राजसुताश्च का ताः ॥ ५८ ॥
अथाद्यमात्मानमिवात्मजं स शुभे निवेश्याहनि यौवराज्ये ।
निनाय कालं ललितैर्विलासैस्तत्संनिधानात्तनुराज्यचिन्तः ॥ ५९ ॥
स्फुटप्रसूनप्रकरप्रसर्पत्सौरभ्यलुभ्यन्मधुपाङ्गनासु ।
कदाचिदासन्नवनावलीषु चिरं स रेमे रमणीसहायः ॥ ६० ॥
समीरणान्दोलितवारिपूरतरङ्गरङ्गत्कमलोपहारैः ।
क्लृप्तातिथेयेषु सरःसु कान्ता वृतः कदाचिद्विदधेऽम्बुकेलिम् ॥ ६१ ॥

कदापि स प्रेम वशाद्वधूनां कपोलपालीकुचमण्डलीषु ।
चकार पत्राङ्कुरचक्रवालं परार्ध्यरोमाञ्चचयेन सार्धम् ॥ ६२ ॥
प्रियः प्रियालापविलासलास्यैराश्चर्यकृद्भिः स्मरकेलिभिश्च ।
कदाचिदन्तःपुरचक्रवालैश्चिरं स रम्यै(त्यै) रमयांबभूवे ॥ ६३ ॥
व्यलीकमालोक्य समाकुलाभिरीर्ष्याभराकुञ्चितलोचनाभिः ।
तत्राश्रुबिन्दुच्छलतः प्रियाभिः कदाप्युपालम्भि विनाक्षरं सः ॥ ६४ ॥
कदाचिदासीत्स विलासिनीनां विलाससर्वस्वरसे निमग्नः ।
स नर्तयामास कदाचिदेताः सौन्दर्यचर्यापरिभूतरम्भाः ॥ ६५ ॥
गजेन्द्रशिक्षाचतुरो गजेन्द्रानदाम्यदुद्दाममदान्कदाचित् ।
कदाचिदुद्वेल""""प्रवाहसंवाहसंदोहमवाहयच्च ॥ ६६ ॥
विचित्रशास्त्रार्थविचारसारैर्वाचस्पतेर्विभ्रममादधानः ।
कदापि गोष्ठीषु विशारदानां स धूनयामास मुदा शिरांसि ॥ ६७ ॥
कदाचन श्रीजिनशासनस्य प्रभावनादद्भुतपुण्यकृत्यैः ।
सुधाप्रवाहैरिव विस्फुरद्भिः श्रेयः फलां वल्लिमिवैधयत्सः ॥ ६८ ॥
अन्तः प्रसर्पत्परमप्रमोदप्रपञ्चचञ्चत्पुलका कुचश्रीः ।
कदाचिदुच्चैर्जिनमन्दिरेषु चकार पूजोत्सवमुत्सहिष्णुः ॥ ६९ ॥
क्वापि क्षणोऽसौ क्षणदेन्दुकीर्तिः श्रीमद्गुरूणां वदनारविन्दे ।
वाचं दधानां मकरन्दमुद्रां भृङ्गी भुजङ्गोपमया पपौ च ॥ ७० ॥
तस्मिन्महीं पालयति क्रमाप्तां नयाञ्चिते पञ्चमलोकपाले ।
ववर्ष काले जलदः समस्तप्रशस्यसस्योद्गममूलबीजम् ॥ ७१ ॥
तत्र प्रजानां पितरीव काम्ये प्रतापनिर्दग्धविपक्षकक्षे ।
स्वचक्रतो नोऽपरचक्रतो वा बभूव भीतिः परिशासति क्ष्माम् ॥ ७२ ॥
कदाचिदानन्दितपौरवृन्दः पुरंदरस्पर्धिपरार्ध्यऋद्धिः ।
ययौ जगल्लोचनकैरवेन्दुर्नदीश्वरं द्वीपमदृष्टपूर्वम् ॥ ७३ ॥
स तत्र विश्वत्रितयाङ्गिनेत्रचकोरचन्द्रातपनिर्विशेषाम् ।
विधाय पूजां जिनमन्दिरेषु प्रेक्षाक्षणं क्षोणिपतिर्ददर्श ॥ ७४ ॥

इतश्च सौधर्मपतिः स्वकल्पस्ववासिभिर्भूरिभिरभ्युपेतः ।
कर्तुं जिनेन्द्रायतनेषु पूजामहोत्सवं तत्र समाजगाम ॥ ७५ ॥
प्रेक्षाक्षणं चाद्भुतभूरिभङ्गीसंगीतकव्यग्रसमग्रलोकम् ।
विभाव्य पूजामतिशायिनीं च शचीपतिर्भूमिपतिं बभाषे ॥ ७६ ॥
धन्योऽसि राजन्सफलं तवैव राज्यं धनं जन्म च जीवितं च ।
दुःखार्दितेऽपीह मनुष्यभावे यस्यातिभक्तिर्जिनपुंगवेषु ॥ ७७ ॥
अतः प्रसन्नोऽस्मि करोमि किं ते मनः प्रियं ब्रूहि पुरंदरोऽहम् ।
अथ क्षितीशोऽपि सहस्रनेत्रं विनम्रमौलिर्विनयाद्बभाषे ॥ ७८ ॥
देव प्रसूतोऽस्मि कुले प्रशस्ये सर्वोत्तमं चास्ति ममाधिराज्यम् ।
सुदुर्लभं जन्मशतैरपीह प्राप्तं मया श्रीजिनशासनं च ॥ ७९ ॥
प्रियं प्रभो स्यात्किमतः परं मे येनार्थितां यामि तवेत्युदीर्य ।
स्थिते नृपेऽनिस्पृहतातिरेकाद्विशेषहृष्टस्तमुवाच शक्रः ॥ ८० ॥
यद्यप्यलुब्धस्य तवास्ति कार्यं न नाम केनापि तथापि राजन् ।
भविष्णुतीर्थेश्वरवैभवेन तवास्तु सख्यं मम निर्व्यपेक्षम् ॥ ८१ ॥
उक्त्वैवमालिङ्ग्य निजासनार्धे निवेश्य कृत्वा क्षणमिष्टगोष्ठीं ।
पुरंदरः क्षोणिपुरंदरश्च निजं निजं स्थानमथेयतुस्तौ ॥ ८२ ॥
देवाः सत्पात्रदानात्प्रसृमरपरमश्रद्धया तद्विधातुः
प्रत्यक्षीभूय जन्तोर्विदधति सुदृशः प्राज्यराज्यप्रसादम् ।
क्षुत्क्षामस्यापि पुण्यापचयपरिचयादासमुद्रान्तपृथ्वी-
पृथ्वीपालैर्विनम्रस्फुटमणिमुकुटैश्चुम्ब्यपादारविन्दम् ॥ ८३ ॥
लक्ष्मीर्वेश्मनि दानभोगसुभगा वाणी प्रसन्नानने
दोर्दण्डद्वयमण्डपे च विजयश्रीमुक्तभूपान्तरा ।
कीर्तिर्नृत्यति दुग्धसिन्धुलहरीलीलाचरित्रे चिरं
श्रद्धापूर्वकसाधुदानजनिते पुण्येऽङ्गिनां जाग्रति ॥ ८४ ॥
त्रैलोक्यं ललितैर्यशोभि⋯⋯यत्पूर्यते देहिनां
कायः कान्तगुणानुबन्धमधुरैः श्वेतांशुशुभ्रैर्गुणैः ।

यच्च श्रीजिनशासनोन्नतिनटीनाट्यप्रमोदैर्मन-

स्तन्मन्ये शुभपात्रदानसुकृतप्राग्भावविस्फूर्जितम् ॥ ८९ ॥

इत्थं नन्दोपनिषदुदयात्स्वानुभूतप्रभावं

स्तावं स्तावं मुनिवितरणं भक्तिसंदर्भगर्भम् ।

सार्वः सर्वं गुरुरिव जनं तत्र सोत्कण्ठमुच्चैः

कुर्वन्नुर्वीमवनितिलकः **श्रीजयन्तः** प्रशास्ति ॥ ८६ ॥

इति श्वेताम्बरश्रीमदभयदेवाचार्यविरचिते जयन्तविजयनाम्नि महाकाव्ये श्रीशब्दाङ्के नरेन्द्रराज्यस्थितिवर्णनो नामैकोनविंशः सर्गः ।

---

ग्रन्थकर्तुः प्रशस्तिः ।

आसीच्चन्द्रकुलाम्बराम्बरमणिः **श्रीवर्धमान**प्रभोः

पादाम्भोरुहचञ्चरीकचरितश्चारित्रिणामग्रणीः ।

स **श्रीसूरिजिनेश्वर**स्त्रिपथगापाथःप्रवाहैरिव

स्वैरं यस्य यशोभरैस्त्रिजगतः पावित्र्यमासूत्रितम् ॥ १ ॥

अभवद**भयदेवः** सूरिरस्मात्स यस्य

प्रभुरभजत तोषं **स्तम्भने पार्श्वनाथः** ।

प्रकटितविकटार्थी सङ्घसाम्राज्यवृद्ध्यै

व्यधित निधिसमानां यश्च वृत्तिं **नवाङ्ग्याः** ॥ २ ॥

तच्छिष्यो **जिनवल्लभः** प्रभुरभूद्विश्वंभराभामिनी-

भास्वद्भालललामकोमलयशःस्तोमः शमारामभूः ।

यस्य **श्रीनरवर्म**भूपतिशिरःकोटीररत्नाङ्कुर-

ज्योतिर्जालजलैरपुष्यत सदा पादारविन्दद्वयी ॥ ३ ॥

**कश्मीरा**नपहाय संततहिमव्यासङ्गवैराग्यतः

प्रोन्मीलद्गुणसंपदा परिचिते यस्यास्यपङ्केरुहे ।

सान्द्रामोदतरङ्गिता भगवती वाग्देवता तस्थुषी

धारालामलभव्यकाव्यरचनाव्याजादनृत्यच्चिरम् ॥ ४ ॥

भृङ्गस्तदङ्घ्रिकमले **जिनशेखरा**ह्वः

**सूरि**स्ततः प्रशमवर्मितकाययष्टिः ।

जिग्ये जगत्त्रयजयप्रयतोऽपि येन
वीरव्रतं कलयता रतिजीवितेशः ॥ ५ ॥

वैराग्यं याति रागे भजति विधुरतां क्रोधयोधे विमाने
माने नष्टाभिमाने कपटपटुभटे क्षोभमाप्ते च लोभे ।
पञ्चेषौ कुञ्चितेषौ समिति निजमिति प्रेक्ष्य सैन्यं सदीन्यं
मुक्त्वा येषां जयाशां निभृतमपसृतं मोहराजेन दूरम् ॥ ६ ॥

प्रगुणितकरुणः क्षमया विराजितश्चारुविग्रहस्तदनु ।
अजनि वशीकृतविषयग्रामः **पद्मेन्दुमुनिराजः** ॥ ७ ॥

उत्फुल्लमल्लीप्रतिमल्लकान्तिः कीर्तिर्भ्रमन्ती भुवनेषु यस्य ।
श्रिया समं सौहृदकाङ्क्षयैव मुष्णाति विष्णोरपि कृष्णभावम् ।

विश्वत्रयप्रथितकीर्तिलतस्य तस्य
शिष्यः प्रशस्यमहि**माभयदेवसूरिः** ।
काव्यं **जयन्तविजयं** रचयांचकार
सारस्वतप्रसृमरप्रतिभाविलासः ॥ ९ ॥

दिक्करिकुलगिरिदिनकर(१२७८)परिमितविक्रमनरेश्वरसमायाम् ।
द्वाविंशतिशतमानं शास्त्रमिदं निर्मितं जयतु ॥ १० ॥

जयन्तविजयकाव्यं परिपूर्णमिति भद्रम् ।